# चतुर्विधपुरुषार्थविचारः

मूल्यम् ८ अष्ट आणकाः

विद्यार्थिनां ६ षडाणकाः

॥ श्री ॥

# ॥ चतुर्विधपुरुषार्थविचारः ॥

( सर्वदर्शनविचारः )

श्री न्यायतीर्थ वेदान्ततीर्थ सांख्यसागररूप

पदवीस्थ श्रीपादाचार्य विरचितः

सच

खानापुरस्थ

दत्तात्रेय गोविंद सडेकर इत्येतेषां

धनंजयाख्य मुद्रणालये मुद्रयित्वा

प्रकाशितः

प्रथमावृत्तिः

१९१४.

मूल्यम्-

विद्यार्थिनां ६ षडाणव

## ॥ श्रीरस्तु ॥

इह खलु नानाविध दुःखरूपे संसारे, दुःखनाशकोपायभूत आत्मविचाराभावेन कर्णस्थ कठिन्यन्वेषणइव, निकटस्थायामपि स्वरूपभूतायां शान्तौ, मृगपतिभीतिपलायित गोगजाइव इतस्ततो दशादिक्षु स्वैरं धावमानाः शान्तिस्थानमलब्धा, हा दुःखं दुखमिति आक्रोशन्तः, दीना जीवाः, सुखलेशमप्यलभमानाः, बहुदुःखस्थितिमनुभवन्तीति सर्वानुभवसिद्धतया न विशेषतः उपपादयामः ॥

तत्परिहारैककारणं दार्शनिकं ज्ञानं, तदनुकूलं सर्वेषां मातृस्थानीयानां ब्रह्मचर्य गार्हस्थ्यादिवर्णाश्रमाणां यथावत्समीचीनतया वर्णनं, सुबोधतयात्रकृत्वा, तत्रोक्तदिशा सदाचरणाचरणेनैव तद्वारा ज्ञानेन च परमसुखं प्राप्तुं सुशकमितिमत्वा, परमसुखेच्छूनां सर्वेषामावश्यकमिति धिया आत्मविचारोत्रसम्यक्कृतः तद्दर्शनेन सुधियां हर्षःस्यादिति निष्कामकर्मजन्य ज्ञानदायिनं भगवन्तमीश्वरं तथैव दयालून् गुरून्प्रार्थये।

प्रमादेनाप्रबोधेनायुक्तंचेल्लिखितं यदि ॥
परिशोध्य तदस्मासु दयांकुर्वन्तु सूरयः ॥

सज्जनकृपाकांक्षी

ग्रंथकर्तृशिष्यः

# [ विषयः ]


१ पुरुषार्थशब्दनिर्वचनम् ... ... ... ... ... १
२ धर्मार्थकाममोक्षरूपाणां चतुर्णामपिपुरुषार्थानांप्रत्येकशोनिर्वचनम् ,,

( तत्र )

धर्मविचारः ... ... ... ... ... ... २
अर्थविचारः ... ... ... ... ... ... ५
कामविचारः ... ... ... ... ... ... ६
मोक्षविचारः ... ... ... ... ... ... ८

( अत्र )

चार्वाकमते मोक्षविचारः ... ... ... ... ... १०
बौद्धमते— ... ... ... ... ... ... १०
जैनमते— ... ... ... ... ... ... १२
न्यायवैशेषिकमतयोः ... ... ... ... ... १३
सांख्ययोगिनोर्मतयोः ... ... ... ... ... १५
अद्वैतवेदान्तिमते ... ... ... ... ... ... १७
द्वैतवादिरामानुजमाध्ववल्लभनिंबारकाणामतेषु— ... ... २०
३ एषुपरमपुरुषार्थत्वंकस्येतिविचारः ... ... ... ... २१
४ एषांपरस्परकार्यकारणभावनिर्वचनम्— ... ... ... २३
५ इमे आर्यधर्मस्यमूलतत्वंभजंतेनवेतिविचारः ... ... ... २४

( अत्रच )

( चतुर्णामाश्रमाणांवचनतः स्वरूपदर्शनंयुक्तितश्चसमर्थनम् ) ...
६ एतेचातुर्वर्ण्यप्रयोजकानवेतिविचारः ... ... ... ... २७

( अत्र )

चातुर्वर्ण्यंवेदेऽस्तिनवा ... ... ... ... ... ,,
स्मृतीनांप्रामाण्यमप्रामाण्यं वा ... ... ,,
चातुर्वर्ण्यद्वेषकारणं नवा ... ... ,,
७ सर्वैवर्णैरेतेलभ्या नवा ... ... ४४

( [illegible] )

मीमांसकमतं शंकराचार्यमतं न[illegible] खडनंच ... ,,
रमणीयव्याख्यायिकयाचातुर्वर्ण्यसमर्थनम् ... ... ... ४८
८ उपसंहारः ... ... ... ... ... ... ५०

# शुद्धिपत्रकम् ।

| अशुद्ध. | | पृष्ठ. ओळ. | | शुद्ध. |
|---|---|---|---|---|
| १ तत्र भवन्तः | ... | १—१० | | तत्र भवन्तो भवन्तः |
| २ फलम् फलं | ... | १—१८ | | फलमफलं |
| ३ मानभुवं ... | ... | १—२० | | मानभूवं |
| ४ वद ... | ... | २— १ | ... | वेद |
| ५ भाषणादिषुष्व | ... | ३— २ | ... | भाषणादिष्व |
| ६ समवायेस्मृतिपार | | ३—१७ | ... | समवायेपार |
| ७ पार्वणशश्वरी | ... | ३—२२ | ... | पार्वणशर्वरी |
| ८ स्वीकुर्मः ... | ... | ४— ३ | ... | स्वीकुर्वन्ति |
| ९ तथाचसूत्रम् | ... | ४—१७ | ... | तथाचयोगसूत्रम |
| १० परपर ... | ... | ४—२५ | ... | परस्पर |
| ११ क्षयिवानु... | ... | ६— १ | ... | क्षयित्वानु |
| १२ अमिन्नर्थे... | ... | ६— २ | ... | अस्मिन्नर्थे |
| १३ द्रव्यं वराज० | ... | ६— ४ | ... | द्रव्यं स्वराज |
| १४ माज्ञाऽप्य | ... | ६— ६ | ... | माज्ञाप्य |
| १५ यातनानुभवितुं | ... | ६—१२ | ... | यातना अनुभवितुं |
| १६ नार्थाय ... | ... | ६—१६ | ... | नार्थस्य |
| १७ तदित्यं ... | ... | ८— ३ | ... | तदित्थं |
| १८ मिदानींमताव | ... | ८—१० | ... | मिदानीमताव |
| १९ कर्तृभोत्क्ररात्मना... | | ९—२२ | ... | कर्तृभोत्क्रात्मना |
| २० दाहदाह... | ... | १०— ६ | ... | दाह |
| २१ परमार्थासद्वस्तु | ... | ११— ८ | ... | परमार्थतः सद्वस्तु |
| २२ एतेनेवा... | ... | ११—२८ | ... | एतेनैवा |
| २३ लभमानभोपि | ... | १२—२४ | ... | लभमानोपि |
| २४ सर्वेश्वपि | ... | १३— ७ | ... | सर्वेष्वपि |
| २५ घटेप्यनुकारी | ... | १३—१८ | ... | घटेप्यनुपकारी |
| २६ संतिः ... | ... | १३—२३ | ... | संति |
| २७ प्रेरमितृत्वेन | ... | १४—१० | ... | प्रेरयितृत्वेन |
| २८ द्रूष्टेः... | ... | १४—२४ | ... | द्रष्टुः |
| २९ आत्मककर्तत्वे | ... | १५—१७ | ... | आत्मनः कर्तृत्वे |

| अशुद्ध | | पृष्ठ. ओळ. | | शुद्ध. |
|---|---|---|---|---|
| ३० वृत्तित्या | ... | १६—२५ | ... | वृत्त्या |
| ३१ वृतिगत | ... | १६—२७ | ... | वृत्तिगत |
| ३२ मापद्यति | ... | १७—१६ | ... | मापद्यते |
| ३३ मद्गृहप्रति वेश्मिनीः | | १९—२७ | ... | मद्गृहंप्रति वेश्मिनी |
| ३४ आस | ... | १९—२८ | ... | आसीत् |
| ३५ कांताकांता | ... | २०— ९ | ... | कांता |
| ३६ चळूयताम् | ... | २३— ७ | ... | छूयताम् |
| ३७ यद्दिछष्यं | ... | २५—२६ | ... | यच्छिष्यम् |
| ३८ निन्द्यावष्ठासु | ... | २५—२६ | ... | निन्द्यास्वष्ठासु |
| ३९ जराक्रान्तं | ... | ३१— ५ | ... | ज्वराक्रान्तं |
| ४० कंचन् | ... | ३३—११ | ... | कंचन |
| ४१ वकश्यत्वे | ... | ३६—१६ | ... | वश्यकत्वे |
| ४२ दद्दष्ट | ... | ३४— ३ | ... | ददृष्ट |
| ४३ द्वेष्टी | ... | ३५— ९ | ... | द्वेष्टि |
| ४४ भजेयुः | ... | ३७— ८ | ... | भजेरन् |
| ४५ केचित् | ... | ३८— ४ | ... | केनचित् |
| ४६ मनोरपि | ... | ३८—२० | ... | मनुरपि |
| ४७ दयवा | ... | ३९—२७ | ... | दथवा |
| ४८ चातुर्वर्णेन | ... | ३९—२८ | ... | चातुर्वर्ण्येन |
| ४९ द्विसहस्त्रं | ... | ४२—२० | ... | चतुः सहस्त्रं |
| ५० वापणे | ... | ४५— १ | ... | आपणे |
| ५१ यतिश्रुतौ | ... | ४५— ५ | ... | येतिश्रुतौ |
| ५२ कृच | ... | ४६—१६ | ... | कच्च |
| ५३ मनुष्यानां | ... | ४६—२६ | ... | मनुष्याणां |
| ५४ पुनः | ... | ४७—२४ | ... | पुत्रः |
| ५५ शूद्रयोनीन् | ... | ४८—१३ | ... | प्राप्तशूद्रयोनीन् |
| ५६ समुपदिष्टइति ... | | ४८—२१ | ... | समुपदिष्टमिति |
| ५७ सती | ... | ४९—१० | ... | सति |
| ५८ कथनेन सर्वं ... | | ४९— ९ | ... | कथनेन न सर्वं |
| ५९ चावलोकाय ... | | ५०—१४ | ... | चावलोकनाय |

———

# ॥ चतुर्विधपुरुषार्थविचारः ॥

श्रीरस्तु

प्राचीना ऋषयः पुराणपुरुषं सच्चित्प्रमोदात्मकं ।
यं ध्यात्वा पुरुषार्थजातमखिलं पूतांतरा लेभिरे ॥
तं देवं निजभक्तरक्षणपरं लक्ष्मीपतिं मंदधीः ।
संसारोग्रभुजंगभीतिविकलो मोक्षाय चाहं भजे ॥

भो भोः सभ्याः, सभालंकाराः, स्वपांडित्यचंडप्रतापपरिखंडितपाखंडिखंडप्रचंडोद्यमोदाराः, परमसुरसस्वरसनाग्ररशनानिबद्धगीर्वाणवाणीमनोहराः, सरस्वतीकंठाभरणहीरकवराः, विद्वद्वराः विदांकुर्वंतु तत्र भवंतः नाहमिमं लेखं स्वाखर्वपांडित्यगर्वभारभुग्नः स्वपांडित्यं दर्शयितुं लिखामि, किंतु दुर्निवारघोरकामक्रोधादिभीषणभोगिनिवासभयंकरापाराज्ञानांधकारपरिपूर्णायां संसारगुहायां पतितानां मूढजनानां ज्ञानदीपप्रकाशदानेनोद्धाराय ॥ अत्र च प्रथमतः पुरुषार्थशब्दस्यार्थं निरूप्य धर्मार्थकाममोक्षरूपाणां चतुर्णामपि पुरुषार्थानां स्पष्टतया विवरणं कृतं मोक्षस्य परमपुरुषार्थतया तत्र च मतबाहुल्येन षण्णां नास्तिकानां षण्णामास्तिकानां च मतानि सारतया प्रतिपादितानि ॥ ततश्च क्रमेणाचाररूपं सनातनधर्मस्वरूपं सम्यक् विविच्य चातुर्वर्ण्यं संप्रति विद्यते नवा, तदिष्टमनिष्टं वा, तत्सफलमफलं वा, अनादि वा सादि वा, इत्यादिशंकामुद्भाव्य समीचीनतया नवीनरीत्या समाहितं ॥ अग्रे च एते पुरुषार्थाः सर्वैर्लभ्या न वेति विचारे नवीनमते प्राचीनमते च सम्यगुल्लिख्य, निर्णीय च तत्वं, सर्वोऽयं लेखः उपसंहृतः ॥ सर्वस्मिन् अस्मिन् लेखे मोक्षचातुर्वर्ण्यविचारौ चाधिकतया कृताविति कृतबुद्धीनां

लेखदर्शनेन विषयी भविष्यति ॥ तस्मात् अनाद्यज्ञानश्रृंखलानिगडित-मतिचरणास्ते दीना जीवा मदीयमिमं लेखं दर्शं दर्शं, निष्कामबुद्ध्या कर्माणि कारं कारं, दीनोद्धारपरायणं नारायणं स्मारं स्मारं, सुकृतजातं चायं चायं, यथाकाममिहलोकेऽर्थकामौ लंभं लंभं, धन्याः संतः, शरद्घन घनसारसारायितचित्तकमलाः प्रायणांते च भजंतु सच्चिदानंदरूपं परमपुरुषार्थं मोक्षम्॥ अस्तु अस्य लेखस्य सर्वेश्वरो हरिर्निदानमिति तमसंख्यै र्जयजयेति सुनिर्घोषैः संभावयामि अंते च जगच्चालकं परमेश्वरं प्रणम्य, मान्यान् वो विज्ञापयामि अस्मिल्लेखे कृपाकटाक्षदानायेति शम् ॥

---

॥ श्रीः ॥

# ॥ पुरुषार्थशब्दार्थनिर्वचनम् ॥

ननु कः पुरुषार्थशब्दस्यार्थः न तावत्पुरुषेणार्थ्यते इति व्युत्पत्त्या पुरुषेच्छाविषयएव पुरुषार्थशब्दस्यार्थः इति सांप्रतम् तथासति घटस्यापि जलाहरणार्थं पुरुषेण कांक्षितत्वात्घटोपि पुरुषार्थः स्यात् नचेष्टापत्तिः तथासति घटपटादीनां नानात्वात्पुरुषार्थानामपि बहुत्वापत्त्या तेषां चातुर्विध्यं श्रुतिस्मृतिकल्पितं व्याकुप्येतेति चेदत्र ब्रूमः। सुखं दुःखाभावश्च पुरुषार्थशब्दवाच्यौ । तथाहिपांसुलपादं हालिकमारभ्या महामहोपाध्यायं सर्वोऽपि जनः स्वसुखार्थैव यतमानो जगति दरीदृश्यते सर्वस्योत्पन्नमात्रस्य जंतोरियमाशीर्नियताऽऽलोक्यते 'मानभूवं भूयासम्' तथा च योगसूत्रम्॥ 'तासामनादित्वमाशिषोनित्यत्वात्' इति एवंच सिद्धं सुखं सर्वैरेवेष्यते । यथा सुखस्य सर्वप्राणिकांक्षितत्वं तथैव दुःखाभावस्यापि, इति सोपि पुरुषार्थः॥ दुःसहनवज्वरव्याधिव्याकुलितमना मानवस्तद्दुःखमपानिनीषुः कटुकं विषायितमप्यौषधं पिबति, तत्कस्यहेतोः? ज्वरदुःखपरिजिहीर्षया ॥ तथा च दुःखाभावोपि पुरुषेच्छाविषय इति तस्यापि पुरुषार्थत्वम् ॥ इमौ तु स्वतः पुरुषार्थौ ॥ स्वतःपुरुषार्थत्वं च यज्ज्ञातं सत् स्ववृत्तितयेष्यते तत्त्वं इतरेच्छानधीनेच्छाविषयत्वमितियावत् ॥ अन्यत्तु आद्व्यणुकमामेरुपर्यन्तं सर्वमपि परम्परया पुरुषेच्छाविषयो भवति इति तदपि परम्परया पुरुषार्थत्वं भजते ॥ ननु यदि सुखं दुःखाभावश्च द्वावेव पुरुषार्थौ, तदा चत्वारः पुरुषार्था इति कथं संगच्छेतेतिचेत्, परम्परयैव पुरुषार्थत्वमिति ब्रूमः ॥ धर्मार्थकाममोक्षाणामिच्छाहि तदितरसुख दुःखाभावेच्छाधीनैव ॥ तथा च तेषामपि परम्परया पुरुषार्थसाधकत्वाद्गौणं पुरुषार्थत्वमित्यलम् ॥ अधिकमग्रे स्फुटीभविष्यति ॥ केचित् सुखमेवैकं स्वतः पुरुषार्थः, दुःखाभावेच्छातु सुखसंपिपादयिषयैवेति तस्य न स्वतः पुरुषार्थत्वम् ॥ नच विनिगमकाभाव इति वाच्यम्। सुखीस्यामित्याकारकेच्छायाएव प्रमाणत्वात्॥ तथा च सुखमेव वांच्छति। दुःखाभावस्य तु तत् प्राप्तिप्रतिबंधकदुःखसामान्याभावरूपेणैवेति सुखमेव पुरुषार्थ इति वदन्ति॥ अपरे तु दुःखाभाव एव पुरुषार्थः॥

अतएव निरर्गलदुःखासिप्रहारजिहीर्षुः संसारी दुःखपरिहारे यथा यतते तथा सुखार्थं न यतते ॥ अपरं च वैषयिकं सुखं सविषान्नमिव न विज्ञानामिच्छाविषयः । संसारदुःखनिवृत्तिस्तु सर्वेषामेवेति सैव पुरुषार्थः ॥ नच नित्यं सुखं तदिच्छाविषयः ॥ तस्य सत्वे मानाभावादिति भाषन्ते ॥ वयंतूभयमपि पुरुषार्थमिति ब्रूमः ॥ नच नित्यसुखे मानाभावः, तस्य मोक्षप्रस्तावे सिषाधयिषितत्वात् ॥ अतः सिद्धं आबालवृद्धकांक्षितसुखदुःखाभावरूपसाक्षात्पुरुषार्थयुग्मसाधनत्वाद्धर्मार्थकाममोक्षाणामपि पुरुषार्थशब्दवाच्यत्वम् ॥

---

## ॥ धर्मपदार्थनिर्वचनम् ॥

ननु को नाम धर्मपदार्थः नच प्रसिद्धएव धर्मपदार्थः ( धर्माधर्मसंस्काराश्चतुर्विंशतिगुणा ) इति तर्कसंग्रहोक्तेरितिवाच्यम् ॥ सत्यं वदन्तं प्रेक्ष्य धर्ममेष वदतीति शिष्टप्रयोगदर्शनात्सत्यवाक्येपि धर्मपदवाच्यत्वसत्वात्। एवं सन्ध्यादीनि कर्माणि समाचरन्तं प्रति धर्मं चरतीति प्रयोगदर्शनात् तत्रापि धर्मपदस्य वाच्यत्त्वसत्वात् नानार्थत्वप्रसंगः। अन्यायश्च नानार्थत्वं॥ तस्मात्कोयं नाम धर्मपदार्थः इतिचेच्छ्रूयताम् ॥ स्वर्गकामोयजेतेत्यादि वेदवाक्येन स्वर्गयागयोः कार्यकारणभावो बोध्यते ॥ एवं कार्यकारणयो सामानाधिकरण्यं प्रत्यक्षतोलोके दरीदृश्यते ॥ नहि काशीस्थो दंडो मथुरास्थं घटं निष्पादयितुं शक्नोति ॥ एवंसति यागस्य क्रियारूपत्वात्, इहैव तस्य नष्टत्वात्, स्वर्गस्य च पारलौकिकत्वादसमानाधिकरणयोस्तयोः कथं कार्यकारणभाव इति समालोच्य, तत्खलु यागरूपं कर्म स्वयं नश्यत्तत्कर्तुरात्मनि संस्कारविशेषं करोति, स एव संस्कारः शास्त्रे धर्मपदेन व्यवह्रीयते ॥ 'प्राभाकरास्तु' तदेव कर्म सूक्ष्मरूपेण तिष्ठत्येवेति वदन्तस्तस्यैव कर्मणः सूक्ष्मावस्थामेव धर्मपदवाच्यां मन्यन्ते। तं केचित्सांख्यादयः स्वान्तःकरणगुणं मन्यन्ते ॥ यथातथा भवतु॥ वेदविहितकर्मजन्योगुणविशेषो धर्मः, इति धर्मलक्षणं ॥ तज्जनकत्वात्सर्वत्र धर्मपदप्रयोगः। यथाआयुर्जनकमपि घृतं आयुरेवेति लाक्षणिकया वृत्त्या व्यवह्रीयते एवं सर्वत्र धर्मजनकेषु

संध्यावन्दन सत्यवचनादिषु धर्मशब्दो गौणः ॥ एवमेवाधर्मोपि वेद-निषिद्धकर्मजन्यः ॥ अत्रापि च असत्यभाषणादिष्वधर्मशब्दो गौणः ॥ ननु—वेदप्रामाण्यांगीकारिणां ब्राह्मणादीनां मतेनैतद्धर्मलक्षणम्, न सर्वेषां मतेनैतद्धर्मलक्षणम् ॥ वेदनिषिद्धाचारिणामपि तेषां प्रमाणीभूतेन कुराणबायबलादिधर्मग्रंथेन धर्मजननात् ॥ नच वाच्यं, यस्य यस्य वर्णस्य वर्णबहिष्कृतस्य वा यद्विहितं, तदाचरणमेव तस्य धर्मजनकमिति ॥ तथासत्यननुगमः, सुंदोपसुंदन्यायेन सर्वेषां धर्मग्रंथानामप्रामाण्यप्रसंगश्च ॥ नच श्रुतयः स्मृतय एव प्रमाणम् नान्यत्कुराणबायबलादिकमित्याग्रहः श्रेयान् ॥ यथा श्रुतिरीश्वरप्रणीतत्वात्स्वतः प्रमाणम् स्मृतयोपि त्रिकालदर्शियोगिवरैः प्रणीता इति युष्माकं मतिः तथा कुराणप्रणेतृषु महम्मदादिषु तेषां प्रतीतिरितिचेत् ( अत्रमीमांसकाः ) भवत्येवाधर्मो वेदविरुद्धाचारिणाम् ॥ नच कस्मादिति वाच्यम् ॥ वेदस्यापौरुषेयत्वेन तस्य निर्दुष्टत्वात् ॥ जैनादिप्रणीतधर्मग्रंथानां तु पौरुषेयत्वेन भ्रांतिमूलकत्वात् ॥ पुरुषस्य च भ्रांतिधर्मत्वात् ॥ नच मन्वादिप्रणीतास्वपि स्मृतिष्वेष प्रसंग इति वाच्यम् ॥ तासां वेदमूलकत्वेन प्रामाण्यात् ॥ तथा च जैमिनेः सूत्रम् ( श्रुतिलिङ्गवाक्यप्रकरणस्थान समाख्यानां समवाये स्मृति पारदौर्बल्यमर्थविप्रकर्षात् ३।३।१४ —) तस्मात् वेदविहितमार्गेणैव गच्छतां धर्मो, नान्येषामिति युक्तमेव वेदविहितकर्मजन्यत्वम्, धर्मस्य लक्षणम् ॥ वयं तु शान्तब्रह्मपरायणाः परद्रोहभीरवो वदामः ॥ वैदिककर्मणां सर्वेषां फलं चित्तशुद्धिरेव ॥ अनाद्यज्ञानमूलकनानायोनिसंचारसंचितागणितपापराशीनां चित्तवृत्तीनां नाश एव चित्तशुद्धिपदार्थः ॥ यथा कूलपतनकलुषिते गंगाजले पार्वणशश्वरीश्वरस्य चंद्रस्य प्रतिबिम्बं स्पष्टतया न समुल्लसति, एवं कामक्रोधादि मलिने चेतसि सच्चिदानंदरूपस्यात्मनः प्रतिबिम्बं न ज्ञायतेऽतोऽज्ञानं ततो दुःखमिति । ततः प्रथमतः चेतःशुद्धिरपेक्षितेति सा यथा वैदिक कर्मणां निष्कामाचरणेन जायते एवमन्यविहितेभ्यः कर्मभ्यो भवतीत्यत्र प्रमाणाभावः ॥ अभ्युदयादीनि तु फलानि प्ररोचकानीति मोक्षपदार्थनिरूपणावसरे प्रदर्शयिष्यामः ॥ अतो निष्कामकर्माचरणमेव चित्त-

शुद्धेर्जनकमिति तदेव करणीयम् ॥ तच्च कर्म लौकिकानां कर्मणां प्रायशः सकामत्वाद्वैदिकमेव ग्राह्यमिति ब्रूमः ॥ अलौकिकास्तु, वेदस्यापौरुषेयत्वं न स्वीकुर्मः ॥ नचैवमप्रामाण्यापत्तिः ॥ यस्यार्थोबाध्यते तत्खल्वप्रामाणम् ॥ यथा शुक्तिकायामिदं रजतमिति ॥ एवं च वेदविचारे प्रचलिते यदि किंचिन्मिथ्यास्यात्तर्हि मिथ्या भवतु, यत्सत्यं स्यात्तत्सत्यमिति स्वीकुर्मो, न कापि नो हानिः ॥ नाप्येवंसति बायबलकुराणादीनामपि ग्रंथानामप्रामाण्यम् ॥ नापि तेषु वृथैवाधार्मिकत्वाग्रहः ॥ नच सुन्दोपसुन्दन्यायावसरः ॥ एकदापि धर्मशास्त्राणां नानापुस्तकानां सत्वादिति व्याचक्षते ॥ तन्नसमीचीनम् ॥ वेदे एकस्याप्यक्षरस्य बाधितत्वं नास्ति ॥ तेन न्यायमतेनानुमिनुमः ॥ वेदाः सर्वज्ञप्रणीताः अबाधितवाक्यसमुदायत्वात् ॥ (मीमांसकमते) अपौरुषेयत्वमनुमातव्यम् ॥ अपिच मोक्षं प्रति तत्वज्ञानं कारणम् । तच्च तत्वज्ञानं वैदिकमेव ग्राह्यम् । अन्येषां न बाधितत्वात् ॥ यदा तु वेदप्रामाण्याभ्युपगंतॄणां न्याय वैशेषिकसांख्ययोगपूर्वमीमांसादिस्मृतीनां तत्वज्ञानं नाम-आत्मज्ञानं बाधितं भवति, तदा कैव कथा स्थूलदृष्टिमनुष्यप्रणीतबायबलादिग्रंथानाम् ॥ एवं सति तद्बोधकत्वेन वेदानां निरतिशयं प्रामाण्यमित्यलं दीर्घविचारेण ॥ प्रकृतमनुसरामः ॥ सोयं धर्मश्चतुर्विधः ॥ तथा च सूत्रम् ( कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ) ( अनिष्टमिष्टामिश्रं च त्रिविधं कर्मणः फलमिति ) भगवद्गीतोक्तेश्च ( अथरमणीयचरणा रमणीयां योनिमित्यादि छांदोग्यश्रुतेश्च ) शुक्लो धर्मः स्वर्गादिफलानां दायकः । कृष्णो हिंसादिजन्यो नारकीयाणां यातनानां दाता, शुक्लाकृष्णस्तु नित्यकर्माचरणजन्यो मानुषत्वस्य सम्पादकः । अशुक्लाकृष्णस्तु तत्र भवतामात्मज्ञानिनां जीवन्मुक्तानां मोक्षप्रद इति । भवत्यस्यापि धर्मस्य सुखसंपादकतया पुरुषार्थत्वम् ॥ यथा च सर्वेषु पुरुषार्थेषु धर्मस्यैव प्राथम्यं तत्कस्मादिति तत्तत्पुरुषार्थानां परपरकार्यकारणभावनिरूपणावसरे निपुणमुपपादयिष्यामः ॥

---

## ( अर्थशब्दार्थनिर्वचनम् )

ननु कोयमर्थशब्दार्थः ॥ नचार्थ्यते वांछयते सर्वैरपिजनैः सोर्थः इतिप्रागेवोपपादितमिति वाच्यम् ॥ तथासति धर्मस्यापि सर्वैरिष्टत्वात्तत्रातिव्याप्तिरिति चेसत्यम् ॥ अर्थशब्दोहि योगरूढो द्रव्ये धनापरपर्याये ॥ तथा च ( अर्थप्राप्तिश्चप्रत्यक्षासिद्धेति ) साहित्यदर्पणे, लोकेऽपि तेन वणिजा महानर्थस्तत्र संपादित इति प्रयुंजानाः, प्राकृताः जनाः, धनमेवार्थशब्दवाच्यं मन्यन्ते । व्यवहारतोहिशक्तिग्रहः । तथा च द्रव्यस्यापि सुखसाधनतया दुःखनिवारकतया भवत्येव पुरुषार्थत्वम् । ननु द्रव्यस्य कीदृशं सुखं प्रति साधनत्वम् । न लौकिकस्य, तस्य सविषान्नवद्धेयतयाऽपुरुषार्थत्वात् । नहि सचेतनः सविषमिदमन्नमिति श्रुत्वा तद्भक्षणाय यतते । नाप्यलौकिकस्य, तस्य तंप्रत्यन्यथासिद्धत्वात् । नहि धनाढ्यएव मोक्षं लभते न दरिद्रीति नियमो मोक्षशास्त्रेषु दृष्टः । प्रत्युत दरिद्री विरक्ततया कदाचिन्मोक्षं लभेतापि । धनमत्तस्य नाशाप्यस्ति । तत्वज्ञानादेवहि मोक्षो भवति । तथा च श्रुतिः । ( तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय ) तच्चतत्वज्ञानं विरक्तस्य, न संपन्नस्येति स्पष्टमेव । किंच अलौकिकसुखं प्रति द्रव्यस्य कारणत्वं न भवतीति श्रुतिरेव निषेधति ( न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ) । तथा चोपरिदर्शिताः श्रुतयोऽलौकिकमोक्षरूपसुखं प्रति साधनत्वाभावं वर्णयन्ति द्रव्यस्येति कथं तस्य पुरुषार्थत्वम् ॥ नच विप्रलब्धो भवान् द्रव्यसम्पादनासमर्थेन केनचिद्दण्डिना । एते काषायवस्त्रधारिणः स्वयं द्रव्यसम्पादने मूढाः परान्स्वार्जितद्रव्यभोगभाजः सरलमतींस्त्वादृशानुपदिशन्ति अरे, किं विषयकर्दमे लुंठसि कीटइव, किं चुम्बसि लालामांसरुधिरमयं कामिनीवदनम्, स्मरेश्वरम्, योहि परलोके त्वामनुग्रहीष्यति । वितर ब्राह्मणेभ्यो दक्षिणामित्यादि । एवं तानसकृदुपदिश्य तथा मल्लमल्लकशेषान्विदधति । वन्दाति च निर्लज्जाः, भविष्यति च ते परलोके सुखमित्यादि चार्वाकोक्तिः श्रेयसी । द्रव्यस्य सुखापेक्षया दुःखदातृत्वमेवाधिकम् । अन्यास्मिन्काले यथातथास्तु ।

भोगकालेपि द्रव्यं क्षयिवानुसंधानेन भोक्तृभ्यो दुःखमेव ददाति। अस्मिन्नर्थे प्रसिद्धामेकामाख्यायिकां कथयामि पुराकिल महम्मदनामा कश्चन यवनपतिरासीत्। स च समग्रां भारतभूमिं निर्लुठ्य द्वादशवारं निरवधिद्रव्यं वराजधानीं निनाय॥ एवं क्रमेणातीतेषु केषुचिद्वर्षेपु समुपस्थिते तस्य प्रायणकाले सर्वं स्वधनं दिदृक्षुः स महम्मदः स्वभृत्यवर्गमाज्ञाऽप्य स्वपुरतः सर्वेषांद्रव्याणां पृथक्राशीन् कारयित्वा, तैः कृतान्पर्वतप्रायान्महतो रत्नराशीन् मेरुकल्पं सुवर्णसंचयं, रजतगिरिनिभं रजतराशिं,एवमन्यांश्च द्रव्यौघानालोच्यैभिः साकं मम वियोगोऽचिरादेव भवितेति जानन्बालक इव भूमौ निपत्य स्वहस्ताभ्यां मुखकमलं पिधायेत्थमवदत्। अहो? मया खलु वृथा हता दीना जीवाः, नैव सुखस्य लेशोपि मद्भाग्ये। इदानीं तु निरवधिसमग्रजन्मकृतकुकर्मजातसंपादिता यामीर्यातनानुभवितुं क्रूरै र्यमकिङ्करैस्ताड्यमानः क्वगच्छामीति नवेद्मीति वदन् मुहुर्मुहुर्मूर्छन् क्लेशानसंख्याननुभवन् प्राणान्व्यजहात्। तुकाराम-नामा साधुवर्यस्तु निस्पृहः सर्वदैव देवनामग्रहणतत्परोऽन्तकाले हसन्निव वैकुण्ठमलंचकार। तस्मात्सर्वमिदं तृष्णामूलं द्रव्यमनर्थायेति चेत्सत्यम्। वेदविहितकर्माचरणसाहाय्यकरणेनार्थ य सुखसम्पादकत्वं, न स्वतः॥ अतस्तस्यापि पुरुषार्थत्वम्॥ अपि च नित्योदरयोगक्षेमसंपादनेनापि तस्य ज्ञानजननद्वारा परमार्थोपयोगित्वात्॥ आहारादिभिः स्वस्थे चेतसि ज्ञानवृत्तिरुदेतीति सार्वजनीनमेतत्॥ अधिकं तु परमपुरुषार्थ विचारे सुस्पष्टमुपपादयिष्यामः॥

---

## ( कामशब्दार्थविचारः )

ननु कः कामशब्दयार्थः॥ नच इच्छार्थककमुधातोर्घञि काम इत्यस्य रूपस्य निष्पन्नत्वादिच्छैव काम इति वाच्यं, तथासतीश्वरस्यापि भुवनसिसृक्षावत्त्वात्तस्यापि सकामत्वापत्तिः॥ अपि च काम इदानीं सकामो भवतु, इत्यादि महाकविप्रयोगदर्शनात् मदनेऽपिकामशब्दस्य शक्तिः स्वीकार्या॥ तथा च नानार्थत्वप्रसंग इतिचेच्छ्रूयतां कामशब्द-

स्यार्थः । देहादावात्मभावभावनादूषितस्यानादिसंसारसागरे पतितस्य या 'कामिन्यादौ समस्ते विषयजाते' स्पृहा 'सुखं मे भूयात्' इत्याकारिका सा काम एव ॥ 'अनंगो हि कामः' इत्यादि तु बहिर्मुखानां साहित्यज्ञानां कवीनां स्वकपोलकल्पितमेव ॥ अथवा कामिनीं पश्यतामवश्यं साप्नुत्तिर्भवत्येवेतिसाकामइति व्यपदिश्यते ॥ तथाचोक्तम् ॥ (कामःसंकल्पः) (काम एष क्रोध एष रजोगुण समुद्भवः) इत्यादि च भगवद्गीतासु ॥ ननु प्राग्दर्शितभगवद्गीतोक्त्याऽस्य दुःखदत्वंप्रतीयते ॥ नच योगिदृष्ट्या अस्य दुःखदत्वेपि सांसारिकदृष्ट्या सुखदत्वमस्त्येवेति कथमपुरुषार्थत्वमिति वाच्यम् ॥ 'यः सर्वैरपि सर्वास्ववस्थासु प्रार्थ्यते' स एव पुरुषार्थइति त्वया स्वीकरणीयम् ॥ अन्यथा चौर्यकर्मकारिणां चौर्यमतीवप्रियमिति तदपि पुरुषार्थतां भजेत ॥ किंच केवलमज्ञानादेव कामे सुखाभासः संसारिजनस्य ॥ तथाहि ॥ येयं कान्ता त्वद्गृहे स्थिता यस्याः संगादधरीकृतस्वर्गसुखास्वादं भवान् सुखं, मन्यते सा कथं दुःखदायिनीत्यालोच्यतां क्षणमप्यायुष्मता । नास्ति तैलं नास्ति घृतमिति वादिनी सा महामानिनं विद्वद्वरमपि पातयति दास्यनरके ॥ नहीदानीमदास्येन द्रव्यं लभ्यम् ॥ नापि पूर्ववद्दास्यमपि किंचिच्छिथिलम् ॥ कठोराप्रमादचण्डदण्डाः पाश्चात्या यत्किंचिदपि परमणुमपि अपराधं न सहन्ते ॥ क्षमाया नामापितैर्नश्रुतमिति मन्ये ॥ तथा च तेषां दास्ये कियती वेदना भवतीति तेषामेव ज्ञानं, येचात्र भूतले समाचरन्ति तेषां दास्यम् ॥ अथैतावतीं वेदनामनुभूयार्जितमपि वित्तं कियत्? विषयवासना तु कथं पूर्णिमायां समुद्रवेलेव प्रतिदिनं वर्धते ॥ तथा च रजोगुणमयीं दुःखमूर्तिं तां कान्तां कः सन्तोषयितुं शक्नोति ॥ तदसन्तोषे तु सुखं खपुष्पतुल्यमेव ॥ एतावन्तं कष्टसागरं समुत्तीर्य क्षणिक सुखवांच्छया प्रवर्तमानो मदनमूढो यदा तया सह रमते तदैव पुत्रादिभिरभिनवैः संसारपाशैर्बध्यतएव तदनु, तन्मरणादिभिः संतप्यमानो खदिरांगारेषु संसारविषयेषु कथं सुखलेशमपि लभेत ॥ अतः कामः पुरुषार्थतां कथं लभेतेति चेदत्रोच्यते ॥ केवलं स्वर्गादिप्राप्त्युपायभूतस्य पुत्रस्य वांछया स्वधर्मपत्न्या साकं विधीयमानो यथाशास्त्रं

कामः पुरुषार्थतां प्राप्नोति ॥ नच दुःखं तन्न् महदिति वाच्यम् ॥ तस्यागन्तुकत्वात् ॥ मुख्यं फलं तु पुत्रस्येदमेव यत्संप्रतिपत्तिकर्मणा पितुः सर्व संसारबन्धमुक्तस्य मोक्षः । तदित्यं संप्रतिपत्तिकर्म । यदाहि जातं पुत्रं सम्यगनुशास्य स्वस्य शक्तं प्रायणमिंगितैः प्रत्यक्षीकरोति । तदा तं पुत्रं स्वसमीपमाहूय ब्रूते । यास्याम्यहं परलोकं येचानुष्ठिता यज्ञा ये चाऽननुष्ठिताः तेषां सर्वेषां त्वमेव भोक्तेति । सच ब्रूते ॐमिति । अथ स कृतकृत्यः पिता समष्टिरूपेण मिलितःकार्यब्रह्मलोकं पाप्नोति । आस्तामियं बृहदारण्यकोपनिषत्कथा । तत्सिद्धमेताद्दशकामिकमुक्त्यर्थं पुत्रस्येषणेति ॥ तदर्थं जायासंगाकांक्षेति भवत्येव तस्य पुरुषार्थत्वम् ॥ अलमिदं मिदानीमेतावदेव मोक्षविचारे सुस्पष्टं निरूपयिष्यामः ॥

---

## ( मोक्षनिर्वचनम्. )

ननु मोक्षो नाम कः पदार्थः ॥ नच मुच्लृ मोक्षणे इत्यस्माद्धातोः प्रत्यये कृते मोक्ष इति रूपं ॥ तथा च देहपातएव मोक्षः ॥ उक्तं च लोकायतिकैः 'भस्मीभूतस्य देहस्य पुनरागमनम् कुतः' इति वाच्यम् ॥ दार्शनिकानां विमतिपत्तेरिति चेदत्रब्रूमः॥ आत्मविचारं प्रस्तुत्य प्रचलितेषु दिगंतव्यापिषु दर्शनेषु पूर्वमात्मस्वरूपं निर्वर्ण्य यथाक्रमं मोक्षस्वरूपं वर्ण्यते ॥ तदुपरि युक्तायुक्तत्वविचारःस्यात् ॥ (देहएव आत्मेति चार्वाकाः) (बुद्धिरात्मेति बौद्धाः) ॥ (परिणामी पदार्थेइति जिनाः) ॥ (सत्पदार्थेइति नैय्यायिकाः) ॥ (सच्चित्पदार्थेइति सांख्याः) ॥ (सच्चिदानन्दरूपोऽखंड इतिवेदान्तिनोवदन्ति) ॥ (देहमुक्तिरेवमोक्ष इति चार्वाकाः) ॥ (विषयाकारमुत्सृज्य आलयाविज्ञानरूपं विज्ञानं बौद्धाः) तत्रापि चत्वारो बौद्धाः, शून्यवादिनः, विज्ञानमात्रास्तित्ववादिनः, बाह्यसत्तानुभेयपदार्थवादिनः; बाह्यसत्ताप्रत्यक्षवादिनः॥ तत्रसर्वशून्यतैवमोक्ष इति शून्यवादिनोविशेषः। जैनास्तु चिरसंचितपापभारमग्नस्य जीवस्यलाबुवत्सर्वेषामुपरियत्समवस्थानम् तन्मोक्षम् मन्यन्ते ॥ नैय्यायिकास्तु देहादौ या आत्मबुद्धिः

साऽभ्रमा तस्यास्तदतिरिक्तो आत्माऽयं सद्रूप इति ज्ञानेन नाशे जाते यत्सद्रूपेणावस्थानम् तन्मोक्षं मन्यन्ते । सांख्यास्तु चिन्मात्ररूपेण यदवस्थानं तन्मोक्षं स्वीकुर्वन्ति ॥ अद्वैतवादिनस्तु नित्यचिदानन्दरूपत्वेनावस्थानं तन्मोक्षं स्वीकुर्वन्ति ॥ इति सर्वाण्यपि मतानि परिदर्शितानि ॥ अत्र युक्तायुक्तत्वेतु संप्रति विचारयामः ॥ प्रथमस्तु शरीरात्मवादीत्थं निराकर्तव्यः ॥ शरीरमेवात्मेत्यसंगतम् ॥ शरीरस्यात्मत्वे बाल्ययौवनवार्धक्यावस्थात्रयवतः शरीरस्यैकस्याभावात्कस्य तादृशसुखदुःखायाश्रयत्वं स्यात् ॥ न च यदा यस्य सुखस्य यच्छरीरावच्छेदेनानुभवः तदा तस्य सुखस्याश्रयस्तच्छरीरमेवेति वाच्यम् ॥ तथासति प्रतिक्षणं शरीरादेरन्यथात्वावश्यकत्वात् बाल्येऽनुभूतस्य स्थाविरे स्मरणं न स्यात् ॥ अनुभूयते चाबाल्यादाशरीरमोक्षमनुष्ठीयमानो व्यवहारो मन्दमतिभिरपि इति सिद्धो देहातिरिक्तात्मा॥ न च यथा कस्तूरिकामोदः सर्वेषामधस्थात् स्थापितायास्तस्याः सर्वेष्वपि वस्त्रेषु परिस्फुरति तथा अनन्तरोद्भाविनि शरीरे पूर्वशरीरं विनश्यदवस्थापन्नं सर्वं संस्कारादिकं समर्थयतीति कल्पनयैव सर्वं कृत विप्रणाशाकृताभ्यागमप्रसंगादिदोषजातं परिहरणीयमिति वाच्यम् ॥ अनन्तानां शरीराणां संस्कारत्वकल्पनापेक्षया अतिरिक्तैकात्मन ॥ आश्रयत्वकल्पनस्य लाघवात् ॥ अयंभावः ॥ देहस्य देहान्तरारम्भकत्वं न स्वतः किंतु धर्माधर्मद्वारा ॥ तथा च मूर्तयोः समानदेशताविरोधात् पूर्वदेहनाशे देहान्तरेण तेषु परमाणुषु भवितव्यमित्युत्तरोत्पादे पूर्वस्य नाशाद्धर्माधर्मयोरपि नाश आवश्यक इति कथमुत्तरशरीरोत्पादः ॥ कथं च स्मरणादीनां निर्वाहः ॥ मन्मते तु कर्तृभोक्तृरात्मनएकत्वान्नानुपपत्तिः स्मरणादेः ॥ अपि च देहो नाम हस्तपाद रूपकर्मेंद्रियाणां चक्षुस्त्वगादिरूपज्ञानेंद्रियाणां च संघातः ॥ न च संघातः प्रत्येकस्मादन्यइति बहूनां तेषां चेतनत्वापत्त्या मतिभेदापत्तिः ॥ यथाहि देवदत्तयज्ञदत्तविष्णुमित्राणां भिन्नत्वेन देवदत्तेन चिकीर्षिते कार्ये विष्णुमित्रादीनां मतिभेदोभवति; एवं हस्ते कंचनपदार्थं जिघृक्षति पादो न तमनुसरेत् ॥ एवं शरीरस्यैवात्मत्वे शरीरदाहे

पातकं स्यात् । न च भवति मृतशरीरस्य दाहे कश्चन पातकीति शरीरातिरिक्तात्मसिद्धिः ॥ न च शरीरातिरिक्तात्मवादिनोऽप्येष दोषः ॥ तन्मते सर्वत्र व्यापकस्य आत्मनः शरीरावच्छेदेनैव दुःखादे-रूपलब्धेरिति वाच्यम् ॥ प्राणसहितशरीरस्यात्माधिष्ठानत्वेन तस्यो-च्छेदजन्यदुःखदानद्वारेणैव तस्य हिंसात्वात् ॥ त्वन्मते शरीरस्यैव सुखदुःखाश्रयत्वात् मृतशरीरदाहदाहस्थले हिंसा दुर्वारैव ॥ किंच वीतरागस्य शरीराभिमानहीनस्य मोक्षकथनादपि शरीरातिरिक्तात्म-सिद्धिः ॥ त्वन्मते शरीरस्यैवात्मत्वात् तस्मिन् कस्य विरागः ॥ इति सर्वथानुपपन्नो ऽतिस्थूलमतिश्चार्वाकपशुः ॥ अतो देहस्य नाशएव मोक्ष इति तस्य सिद्धान्तोपि न संगच्छते इत्यलं ॥

---

## ( बौद्धमतेमोक्षविचारः )

बौद्धास्तु चत्वारो माध्यमिकसौत्रान्तिकवैभाषिक योगाचार भेदेनेति पूर्वमेवोपपादितं ॥ तत्र माध्यमिकमते सर्वशून्यतैव मोक्ष इति सुतरामनुपपन्नं ॥ सर्वस्यैव शून्यत्वे कस्य वा मोक्षः ॥ मोक्षो नाम निरतिशयं सुखं दुःखाभावश्च ॥ सुखं नाम सर्वदा केनाचिदनुभू-यतएव ॥ नहि अज्ञातसत्तां सुखादीनां कश्चित्स्वीकुरुते ॥ एवंच सुख-रूपमोक्षस्य भोक्त्रभावादनुपपत्तिः ॥ अपि च सर्वोपि सचेतनः स्व-सुखायैव प्रयतमानो लोके दरीदृश्यते ॥ मोक्षोपि सुखरूपः तत्प्राप्तौ यत्नः सदात्मवादिनां युज्यते ॥ त्वन्मते तु आत्मोच्छेदरूपमात्रत्वात्तदर्थं कथं सचेताः प्रयतेत ॥ प्रयतमानश्च कथं देवानां प्रियेष्वपश्चिमतां न भजेत ॥ विज्ञानास्तित्वमात्रवादिनां मते संभवेदपि ॥ तन्मते न सर्वशून्यता मोक्षः किंतु चित्तचैत्या इमे भावाः इति नयादंतर्वर्ति अनाद्यज्ञानजनित संस्कारकलुषितं विज्ञानम् तत्तदाकारेण परिणमति ॥ ततश्च बहिर्नाना-विधाः पदार्था भासन्ते ॥ यदा तु शून्यंशून्यमिति विभावनीयमित्यादि सद्गुरुपदेशात् विगतविषयवासनं तदंतःकरणं स्वरूपेणैव परिणमच्चिरम् तिष्ठति तदा सावस्थामोक्षपदेन व्यवह्रीयते ॥ न च बहिः प्रत्यक्षी-

भूतानां पदार्थानां चित्तकल्पितत्वे किं प्रमाणं अपिच यदा घटं पश्यति देवदत्तस्तदापि सोस्त्येवान्यदापि सएवेति देवदत्तचित्तवृत्ते र्घटोन्यएवेति कथंचित्तचैत्याभावा इतिनयः॥ कथंच विज्ञानस्य तस्य मोक्षावस्थायां परिणामित्वामितिवाच्यम्॥ इदं रजतं, एष घटा इत्यत्र भ्रमप्रमा साधारणे ज्ञाने सर्वत्र प्रथमतो ज्ञानं तस्य पदार्थस्य जायते ॥ अथ च स बहिरवभासते नैवं ज्ञानं पदार्थाव्यभिचारि। स्वप्नस्थले पदार्था न सन्ति॥ अथ च ज्ञानं जायते॥ तस्माज्ज्ञानमेव सर्वं तत्तद्विषयाकारेण भासमानं भासते न परमार्थासद्वस्तु ज्ञानाद्भिद्यते॥ अपि च यथा भ्रमस्थले इदं रजतम् इत्यत्र रजतस्य बाधो जायते नैवमिदत्वस्य, तस्य पारमार्थिकत्वात्॥ तथाचान्तर्वर्ति रजतं बहिरवभासते॥ बहिः संसर्ग मात्रं बाधितं भवति इत्यागतमेव भावानां चित्तकल्पितत्वम् ॥ एवं मोक्षावस्थायामपि विज्ञानं परिणमदेवावतिष्ठते॥ यत्सत्तत्क्षणिकमिति व्याप्तेः॥ एतन्मते यद्यपि कथचिन्मोक्षार्थं प्रवृत्तिः संगच्छेत परंच कृतविप्रणाशाकृताभ्यागमस्य दोषस्य दुर्वारत्वम् ॥ तथाहि अंतःकरणंहि क्षणिकमेव सत्वात्॥ इति अधुना मया यतितव्यं मोक्षार्थम्॥ मोक्षो हि नामानंतजन्मसाध्यपुण्यसंचयसाध्यइति तदवस्थायां न प्रयत्नकृदंतःकरणम्, मोक्षसुखभुक्तु अन्यदेवेति कृतविप्रणाशाकृताभ्यागमोदुर्वारएव ॥ न च तदेवान्तःकरणं स्वपरिणामरूपेण तदवस्थायां विद्यते इति वाच्यम्॥ परिणामस्य अन्यत्वात्॥ अन्यथा पशुदेहधारणावस्थायां विद्यमानमन्तःकरणं मनुष्यदेहे प्राप्तेपि स्वोचितां क्रियां कुर्यात्॥ अपिचान्तःकरणमेवात्मेतिनसाधु ॥ अन्तःकरणस्य भावविकारत्वात् जडत्वम् तथाच तस्य चेतनत्वं व्याहतम् ॥ न च यथा दीपो जडोपि घटादीन् जडान्पदार्थानवभासयति तथा चित्तं जडमपि घटादीनवभासयेत् आत्मानमपीति नकाचिदनुपपत्तिरिति वाच्यम्॥ दृष्टान्तवैषम्यात् ॥ दीपोहि चक्षुःसंयोगमपेक्षते नहि जनुषान्धो निबिडान्धकारनाशकारिणीं प्रदीपिकामपि पश्यति तत्कस्य हेतोः। नेत्रस्याभावादिति ॥ आत्मानं सर्वेपि काणाः कुब्जा बाला अपि जानन्ति॥ इति आत्मपक्षे प्रदीपस्य न दृष्टान्तत्वम् ॥ एतेनेवापरा-

धीनप्रकाश्यत्वरूपं स्वयंप्रकाशकत्वमपि आत्मनः सिद्धं ॥ किंच यथा देवदत्तविष्णुमित्रादिभिर्दृष्टो घटः एक एवेति सर्ववादिसंमतं तथैवाहमित्यनुभवे स्फुरन्प्रकाशोपि एक एव स्वीकरणीयः ॥ इति चित्तस्य क्षणिकत्वाभ्युपगमात् ( विज्ञानवादिमते ) आलयविज्ञानधारारूपो मोक्षो न समीचीनः ॥ वैभाषिकयोगाचारयोस्तु मोक्षईदृशएवेति न ते पृथग्दूषणीये इति शम् ॥

---

## ( जैनमते मोक्षविचारः )

( जैनास्तु )—अहं सुखीत्यादि सर्वजनानुभवे विषयीभूताखंडैकात्मानंगीकरणात्सादृश्यात्तथाप्रत्ययमुपपादयतां बौद्धानांमते मनः प्रत्ययमलभमाना देहातिरिक्तमात्मानं स्वीकुर्वन्ति॥ येन चाहं सुखीति प्रत्ययाः सामंजस्यं प्राप्नुवंति ॥ परंच सोपि देहपरिणामीति तेषां संमतं। अयं तेषां भावः ॥ सर्वेहि पदार्थाः सावयवाः विकारित्वात्घटवत् इति व्याप्त्या आत्मनोपि सावयवत्वं ॥ यथाहि घटपटादयः कपालतंत्वादिभिरुत्पादिता एवं आत्मापि पार्थिवैरेवाणुभिर्निर्मितः ॥ यदाच स पिपीलिकादेहा त्स हस्तिशरीरं प्राप्नोति तदा धर्मविशेषात् तत्र चान्येपि परमाणवः समागच्छंति येन च स्थूलो भूत्वा हस्तिशरीरं व्याप्नोति तथैव च स यदा पापमाचरति तदा हस्तिशरीरात्पिपीलिका देहं लभते तदा तस्याधर्मविशेषात्तस्य बहवो अणवः प्रयान्ति येन पिपीलिकादेहपरिमाणी भूत्वा तत्र तिष्ठति ॥ ( अतएवोक्तं स हस्ति पुद्गलं प्राप्य हस्तिपुद्गलो भवति पिपीलिकापुद्गलं प्राप्य पिपीलिका पुद्गलो भवति ) अत्रच प्रत्यक्षं प्रमाणम् ॥ खड्गादिना छिन्नमस्तकस्य पुरुषस्य शवमितस्ततः क्षणमात्रं लुंठति तत्र कारणं च सावयवस्यात्मनः केचनावयवा स्तत्रातिष्ठंतीति नच जडत्वात् कुतस्तस्य चेतनत्वमिति वाच्यम् ॥ यथा सुधाबिन्दुषु प्रत्येकं स्फुटमनुपलभमानमोऽपि मदः सुधाचषके विद्यते इति तथा प्रत्येकमवयवे अनुपलब्धापि चेतनाऽवयवसमूहेऽजायतेइति कल्पनात् । एवंच जैनमतेऽनाद्यज्ञानजन्यपापराशि-

भारात्संसारसागरे मग्नस्य जीवस्य जैनधर्मविहितकर्माचरणात् समुपाचित धर्माधिक्याल्लघुभूतस्य या अलाम्बुवत्स्थितिः सामोक्षः। तदपि न युज्यते। प्रथमतो देहपरिमाणवत्वमेवात्मनो व्याहतम् ॥ यदि चात्मासावयवो विकारीस्यात् तदा पुनः कृतविप्रणाशाकृताभ्यागमप्रसंगो दुर्वारएव नहि पिपीलिकादेहे दुःखमनुभवन् देवदेहे सुखमनुभवन् एक एवात्मा, तस्य परमाणुप्राप्त्यप्राप्तिकृतत्वेन भिन्नत्वात् ॥ अपि च शूद्रदेहेनानुष्ठीयमानधर्माश्रयत्वं किं सर्वेष्वपि जीवावयवेषु विद्यते उत केषुचित् ॥ अंते विनिगमकाभावः आद्ये च तादृशधर्माश्रयाणां सर्वेषामणूनामभावात् कथं दिव्यदेहादीनां प्राप्तिः । नहि दंडचक्रचीवराद्यनेककारण सम्रवधानजन्यो घटःकेवलदण्डसमवधानेसति भवति ॥ भवंश्चक्रचीवरादीनां कारणतां न खण्डयति ॥ अपि च किमर्थं एषप्रयासो जैनैः स्वीकृत इति न जानीमहे ॥ नहि जैनमतेप्यात्मनोऽखण्डत्वम् तस्य सावयवत्वेनानित्यत्वात् प्रत्युत देहात्मवादिनामेव समीचीनत्वं तदपेक्षया लाघवात् दूषणं च समानमेव ॥ किंच, सुधाबिन्दुदृष्टान्तेन यत्सावयवस्यात्मनश्चेतनत्वमुपपादितम् तदपि न संभवति यथा बिन्दुषु सूक्ष्मं मदकारणत्वमस्ति इति सर्ववादिसम्मतम् नैव घटपटाद्यवयवेषु परमाणुषु चेतनत्वमस्तीति केनाप्यभ्युपगतम् ॥ तत्र च यथा चषकमद्ये मदजनकत्वं प्रत्यक्षतो दृश्यते ॥ नैवं घटेष्यनुकारी चेतनत्वं दृश्यते ॥ येन तत्कारणेष्वपि चेतनत्वं गूढमभ्युपगच्छामः ॥ तथा च कृतविप्रणाशा कृताभ्यागमदोषस्य जागरूकत्वान्नेयं जीवस्यालाम्बुवत्स्थितिरपि जैनाभ्युपगतो मोक्षः समीचीन इति ॥

---

## ( न्यायवैशेषिकयोर्मोक्षविचारः )

'नास्तिकाः' 'चार्वाकचतुर्विधबौद्ध जैनभेदेन' षट् संतिः ॥ तेषु सर्वेषु कृतविप्रणाशाकृताभ्यागमदोषस्य वज्रलेपायितत्वात् ।। प्रथमास्तिकौ न्यायवैशेषिकशास्त्रप्रणेतारौ गौतमकाणादौ तद्दोषपरि-

जिहीर्षया संतमखण्डं नित्यमात्मानं स्वीकुर्वन्ति ॥ एवं च पिपीलिका देवदेहावच्छेदेन सुखदुःखानुभवकर्तुरेकत्वात् न नास्तिकदोषावसरः ॥ ननु नैयायिकमते नात्माणुः, तथासति सुखदुःखादीनामात्मगुणत्वात् तत्प्रत्यक्षे च महत्वस्य कारणत्वात् आत्मगत सुखदुःखादीनां प्रत्यक्षं न स्यात् नापि मध्यमपरिमाणकः तथासति यन्मध्यमपरिमाणं तदनित्यमिति व्याप्त्या तस्यानित्यत्वं स्यात् ॥ परिशेषाद्विभुत्वमिति कथंपिपीलिकाशरीरं विहाय मनुष्यदेहं प्राप्नुयात् ? अक्रियात्वात् ॥ इति चेत्सत्यम् ॥ मनएव तत्र तत्र गच्छति नात्मा । न च भोक्तात्मा कार्यकर्तृ तु मनः कथं वैयधिकरण्येन कार्यकारणभावइतिवाच्यम् ॥ धर्माधर्माश्रयकर्तृ भोक्त्रात्मनः प्रेरयितृत्वेन सर्वदोषाभावात् ॥ यथाहि कंदुकप्रेरणेन तत्प्रेरयितैव सुखी दुःखी भवति ॥तदनुकुला च कृतिरपि तस्मिन्नेव भवति ॥ कंदुकस्तु केवलं क्रियाश्रयो भवति एवं मनः केवलं सुखदुःखप्रत्यक्षे कारणं भवति ॥ तद्भोक्तातु जीवएवेति न वैयधिकरण्यम् ॥ एवं च मनएव तत्र गच्छति यत्र च भोक्तृत्वं तस्य धर्माधर्माभ्यां संभवति। न च विभुत्वे परगतसुखादेः प्रत्यक्षं कथं नेति वाच्यम् ॥ इंद्रियसंयोगसहकृतात्ममनःसंयोगस्य तत्प्रत्यक्षं प्रति कारणत्वात् नानुपपत्तिः ॥ न चैकदा यदिंद्रियसहकृतमनःसंयोगः तदानीमन्यस्यापि मनःसंयोगस्य विद्यमानत्वात् पुनरप्येषापत्तिर्दुर्वारैवेति वाच्यम् ॥ तत्तदज्ञानसहकृतत्वमेव वैजात्यमृतत्तदात्ममनःसंयोगे निवेश्यते॥ तत्तदज्ञानजनितधर्माधर्मौ हि तत्र तत्रैवासक्तिं मनसो जनयतः ॥ तथा च तदात्मगतानेव धर्मान् प्रत्यक्षीकरोति नान्यदीयानित्यखिलं निर्मलम् ॥ अपि च जीवस्याणुत्वे सर्वांगीणशैत्यसुखाननुभवः, क्रियाश्रयत्वाज्जडत्वम्, योगिशरीरेषु सर्वेष्वपि सुखदुःखादिभोक्तृत्वम्, कारीरीष्टिकर्तुरात्मसंयोगाद्वृष्टेः प्रादुर्भावाभ्युपगमासिद्धांतहानिः, इत्यादीनि बहूनि दूषणानि स्वयमूह्यानि ॥ तथा च शरीरादौ योऽनाद्यात्माभिनिवेशस्तज्जन्यधर्माधर्माभ्यामनिशमिह संसारचक्रे भ्रमतो जीवस्य वेदविहितकर्माचरणशुद्धसत्वस्य या देहादावात्मभेदबुद्धिस्तस्यामुदितायां

स क्षीणक्लेशो भवत्यथच देहपातानंतरं केवलं सद्रूपेणावतिष्ठते ॥ न पुनर्बंधाय प्रभवतीत्यर्थः ॥ एवंच नैय्यायिकमते शरीरातिरिक्तात्मज्ञानमेव तत्वज्ञानम् ॥ तस्योदयाद्देहात्मतादात्म्यज्ञानं भ्रमरूपं नश्यति तन्नाशे च दुःखं सर्वमेव नश्यति। तदुक्तम् (दुःखजन्मप्रवृत्तिदोष मिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतरापायादपवर्गः ॥ नच तदानीं कीदृशी आत्मनः स्थितिरिति वाच्यम् ॥ शुद्धसद्रूपेणैव, न चिद्रूपेण नाप्यानंदरूपेण तयोर्जन्यत्वस्वीकारात् ॥ मन्मतेहि आत्मा ज्ञानरूपचेतनायोगाच्चेतनः॥ न सांख्यसिद्धांतइव स्वतः प्रकाशरूपः तस्य व्यापकत्वेन सर्वदा सर्वत्र परिस्फुरणतापातात् ॥ सुषुप्त्यभावप्रसंगाच्च ॥ मन्मते तु तदानीं मनसः पुरीततिप्रविष्टत्वान्न ज्ञानस्योत्पत्तिरिति भवति सुषुप्तिः ॥ नच नित्यसुखाविर्भावः ॥ सुखस्य नित्यत्वे प्रमाणाभावः ॥ श्रुत्यादौ सुखस्य दुःखाभावरूपतयैवोपपत्तेः ॥ एवंच दुःखाभावरूपो मोक्षः, तस्य भोक्तुः स्थिरस्य सत्वान्न काप्यनुपपत्तिः ॥ इत्यलं ॥

---

## ( सांख्ययोगिनोर्मतेमोक्षविचारः )

शांतब्रह्मोपासकाः सांख्यास्तु नात्मनः कर्तृत्वं स्वीकुर्वन्ति ॥ तथा सुखदुःखादीनामात्मगुणत्वं, तथा ज्ञानप्रकाश्यत्वं च,। अयं तेषांभावः । आत्मककर्तृत्वे तस्य परिणामित्वापत्तिः ॥ तथाहि । कर्तृत्वं नाम घटोत्पादानुकूलकृतिमत्वम् ॥ कृतिश्च प्रयत्नः तस्याश्च गुणत्वान्निर्गुणे पुरुषेऽसंभवः ॥ यदि च स्वीक्रियते तदा तस्य नित्यत्वापत्त्या जगदाकारेण परिणमंत्या प्रकृत्या साकं संबंधस्य नित्यत्वापत्या मोक्षाभावप्रसंगः ॥ अपिच कार्यानुकूलशक्तिमत्वेन तस्य कर्तृत्वं त्वया वक्तव्यम् ॥ तथाच नदीगमनरयजन्यवालुकाराश्यादौ पुरुषस्य कर्तृत्वं न संभवति॥ प्रकृतेरपि तथैव कर्तृत्वं स्वीकर्तव्यमिति गौरवापत्या प्रकृतेरेव कर्तृत्वम् ॥ अतएव प्रकृष्टं करोतीति व्युत्पत्या प्रकृतिपदवाच्यत्वं तस्याः॥ एवंच सुखदुःखादीनां नात्मगुणत्वम् ॥ यद्यात्मगुणत्वं तेषां स्यात् तदा सुखदुःखादीनां कार्यत्वात्

तद्रूपेण नाशः स्यादिति न कोपि पुरुषे गुणः । न च नित्यसुखे प्रमाणमस्ति । एवंच चित्तवृत्तीनां सुखदुःखमोहात्मिकानां पुरुषे आरोपमात्रं भवति न तत्वतः पुरुषे सुखं दुःखं वास्ति ॥ किं च ज्ञानादिभिः प्रकाश्य आत्मेति पक्षे ज्ञानादीनां क्षणिकत्वाज्ज्ञानस्योत्पत्तिकाले तन्नाशकाले च ज्ञानस्यासत्वात्कथमात्मा प्रत्यक्षः स्यात् ॥ अप्रत्यक्षीभूते चात्मनि नाहमस्मीति सर्वोपि प्रतीयात् ॥ नप्रत्येति तस्मादात्मा स्वयंप्रकाशः ॥ न च तस्य व्यापकत्वे सर्वत्र प्रकाशरूपत्वापत्तिरिति वाच्यं ॥ तमोगुणस्य तत्प्रतिबिंबग्रहणायोग्यत्वात् । यथाहि सर्वत्र सुखस्य प्रतिबिंबे पतितेपि दर्पणे एव तत्स्पष्टतया प्रतिभाति तथा न घटादिषु तामसपदार्थेषु ॥ एवं स्वयंप्रकाशरूपस्य पुरुषस्य सर्वत्र व्यापकत्वेपि तामसपदार्थेषु नतत्प्रतिबिंबं भाति; सत्वरूपचित्तेतु तत्प्रकाशतइति न कश्चिद्दोषः ॥ न च सुषुप्त्यनुपपत्तिः ॥ सुषुप्तिर्नाम न वृत्त्यभावमात्रम् ॥ तथासति सुखमहमस्वाप्सं न किंचिदवेदिषम् ॥ इत्यनुभवस्य सार्वजनीनस्याभावप्रसंगात् ॥ मन्मते तु अभावमात्रविषयिण्या वृत्तेर्वर्तमानत्वान्नकाप्यनुपपत्तिः ॥ तदुक्तम् ( अभावप्रत्ययालंबना वृतिर्निद्रा ) ( पा० सू० ) एवंचोक्तावृत्तिरेव सुषुप्तिरिति ॥ ननु पुरुषस्य निर्गुणत्वाद्वास्तविकदुःखात्मकबंधाभावेन बद्धमुक्तयोः को विशेषः ॥ मोक्षार्थं शास्त्रादिश्रवणे प्रवृत्त्यनुपपत्तेश्च ॥ किंचाहं सुखीति कथं सामानाधिकरण्यम् त्वन्मते चित्तं सुखीत्यनुभवेन भाव्यमितिचेत्सत्यम् ( वृत्तिसारूप्यमितरत्रे ) ति सूत्रेणैवेयमाशंका तत्रभवद्भिः योगदर्शनकारैः समाहिता ॥ अयं तेषामाशयः ॥ वस्तुतस्तस्य बंधासंभवात्सत्ये च बंधे तस्य निवर्तनासंभवात् संबंधऔपाधिकः स्वीकरणीयः ॥ यथाजपासन्निधानेजपानिष्ठं लौहित्यं स्फटिके भासते नहि तदानीं श्वेतस्फटिक इति कस्याचिन्मतिरुदेति एवं चित्तसन्निधाने चित्तवृत्तित्या प्रकाशके संनिहिते पुरुषे तादृशधर्मविशिष्टत्वेन व्यपदेशमात्रंभवति ॥ जपासन्निधाने जपालौहित्येन यथा स्फटिको न दुष्टो भवति ॥ एवमेव वृतिगतधर्मारोपेपि स वास्तविकतादृशधर्मवान्नैव भवति ॥ अयमेव बंध इत्युच्यते । तदुक्तम् ( यद्यात्मा मलिनः स्वच्छो

विकारीस्यास्वभावतः। न च तस्य भवेन्मोक्षो जन्मांतरशतैरपि ॥ )
यथाकाष्ठस्वरूपं प्रकाशयितुं गतोग्निः काष्ठस्य रूपं वक्रं वा वर्तुलं वा तथैव भासते उच्यते च बालैः भो भो अग्निर्वर्तुलो वक्रो वेति तथा व्यपदिश्यमानोपि सोग्निः तादृग्धर्मवान्नभवति । एवमेवैष पुरुष इति तादृशव्यवहारविषयतैवास्य बंधः प्राप्तः ॥ तथाच मोक्षोपि तादृग्वृत्तितोऽतिविलक्षणस्य पुरुषस्य भेदेन ज्ञानं तत्वज्ञानं तस्माच्चाज्ञाननिवृत्तिः अज्ञाननिवृत्तौ दुःखाभाव एवेति ( सांख्यसिद्धांतः ) न च सुखमपि नित्यमिति वाच्यम् ॥ तस्य नित्यत्वे मानाभावात् ॥ योगिनां मतेऽन्यथाख्यातिः स्वीकरणीयेति न किंचिदपि भेदकम् ॥ एवंच जपासमवधानासमवधानकृते स्फटिके लौहित्यशुभ्रत्वव्यवहाराविव चित्तसमवधानासमवधानकृतौ बंधमोक्षव्यवहारौ पुरुषे इति सुस्थम् ॥ वस्तुतस्तु इदानीमपि सर्वे मुक्ता एव। ननु सिद्धेर्थे न कोपि यतते यतमानश्च मंदमतिर्लोके उपहास्यतां प्राप्नोति । एवं सति सिद्धं मोक्षं प्रतिप्रवर्तयच्छास्त्रं कथं प्रामाण्यं लभेत कथं च तस्मिन्मनुष्यः प्रवर्तेत- इतिचेत्सत्यम् ॥ सिद्धेप्यसिद्धत्वभ्रमात्सर्वमिदमुपपद्यते यथा कंठगतमपि हारं विस्मृत्य सोरस्ताडमाक्रंदंती तरुणी मोहमापद्यति तदनंतरं केन चिदात्मीयेन बोधिता बालेकिमेवमाक्रंदसि न क्वापि ते हारो गतो न केनापि हारितः किंत्वधुनापि तेकंठमलंकुर्वन् वर्तते पश्य तमिति ॥ श्रुत्वा च तद्वाक्यं ससंभ्रमा सा तरुणी तंसंतमपि हारमसंतं मन्वाना दुःखदुःखितासती इदानीं तमभिनवदत्तमिव मन्यमाना सशिरःपातं तमाप्तं स्तौति। तत्कस्य हेतोः ? भ्रमात् सन्नपि असन्निव हारआसीदिति ॥ तथैवायमात्मा ज्ञात इतिसर्वाण्यपि सार्थकानि कर्माणीति सांख्यमते दुःखाभावरूपएव मोक्षः सचेदानीं सन्नपि अज्ञानादसन्निव भातीत्यलम् अधिकमग्रे स्फुटीभविष्यति ॥

---

## ( अद्वैतवेदान्तिनये मोक्षविचारः )

अद्वैतवादिनस्तु-यद्यपि सच्चिदात्मस्वरूपस्वीकारः सांख्यानां युक्त एव। एवं घटादीनां त्रिगुणात्मकत्व स्वीकारोपि समीचीन एव ॥

तथाऽत्मनोनिर्गुणत्वं युक्तमेव परं च, पुरुषनानात्वस्वीकारं प्रकृतिसत्यत्व स्वीकारं च न मर्षयाम इति वदन्ति ॥ तथाहि– पुरुषनानात्वस्वीकारः किमर्थः नचैकात्म्यत्वे बद्धमोक्षव्यवस्थानुपपत्तिः॥तदर्थं शास्त्रशिष्यभावानुपपत्तिः, कर्मकांडस्यानर्थक्यंचेति सर्वस्य व्याकुलत्वापातइति वाच्यम्॥ सर्वस्य दोषजातस्य क्रमेण समाधास्यमानत्वात् ॥ प्रथमतो बंधस्यैवाऽसत्यत्वं प्रतिपाद्यते, कोहि बंधो नाम, संसारदुःखाक्रांतत्वमितिचेदिष्टापत्तिः अस्त्येव व्यवहारदशायां जीवस्य दुःखित्वम् नच त्वन्मते एकस्यैवात्मनः सत्वाज्जीवस्य बंध इति कथं संगच्छतेति वाच्यम् व्यवहारदशायां जीवस्य स्वीकृतत्वात् । न च द्वैतापत्तिः ॥ तस्यापि व्यावहारिकत्वेन स्वीकारात्। अयंभावः । यथा आकाशस्योपाधियोगात् घटाकाशः पटाकाशइति व्यवहारस्तन्निबंधनं कार्यंचापि दृश्यते घटाकाशो याति पटाकाश एतावानिति परं च आकाशस्य न परमार्थतो भेदः उपाधिरेव भिद्यते उपाधिनिमित्तका एव व्यवहारा जायंते एवं चित्तोपाधिगताः सुखदुःखादयो धर्मास्तास्मिन्नेकस्मिन्नेवात्मनि ( आकाशतुल्ये ) आरोप्यंते वस्तुतः एकमेवाद्वितीयमिति सिद्धांतः । इयं व्यवहारावस्थामात्रं बंधइत्युच्यते तथैव व्यवहाराभावो मोक्ष इत्युदाह्रियते । अयं गूढाशयः—आत्मनः कीदृशः स्वभावः? यदि वास्तविकाज्ञानाश्रयत्वं तदा तस्याज्ञानस्य नाशः कदापि न स्यात् । यथा अग्नेरुष्णत्वं न शिल्पिशतैरप्यपनीयते अथ यदापनीयते तदा तदौपाधिकमिति स्वीकरणीयं यथा स्फटिकलौहित्यनिराकरणे जपादूरीकरणं। नैवं स्फटिकश्वैत्यं निराकर्तुं शक्यं, तस्य स्वाभाविकत्वात् एवं च तदज्ञानमुपाधिकल्पितमित्यंगीकरणीयम् तथा च आत्मनः कीदृकतत्वमिति विचारे प्रचलिते ' सच्चिदानंद ' रूपत्वं स्वीकरणीयम् । येयं घटादौ सत्ता भासते तत्र सर्वत्राधिष्ठानभूतब्रह्मनिष्ठसत्ता भासते नान्या घटादिषुभासमाना । तथैव घटादीनांप्रकाशकारिणी वृत्तिस्तस्या अपि जडत्वात् तत्प्रकाशकश्च कश्चित्स्वीकरणीयः स एवात्मा,। एवं जगति सुखंदुःखमपीत्युभयोः कल्पनापेक्षया दुःखमात्रं संसारे कल्प्यते, विषयोपभोगे भासमानं सुखं तु सत्वाकारांतःकरणवृत्तिप्रतिबिंबितानंदरूपात्मन एव ॥ न च विषोप-

भोगेपि कुतस्तादृशं सुखं न भासते, तदानीमपि वृत्तिप्रकाशार्थमात्मप्रतिबिंबस्यावश्यकत्वादिति वाच्यम् । विषोपभोगस्य सत्वाकारांतःकरणवृत्त्युदयंप्रत्यकारणत्वात् ॥ न च विषयएव सुखमात्मैव दुःखरूप इति कुतो न वैपरीत्यमिति वाच्यम् ॥मोक्षप्रतिपादकशास्त्रवैयर्थ्यापत्तेः॥विषयवैराग्योपदेशशास्त्रस्य वंचकत्वापत्तेः ॥ अपि च यत्सत्वे यत्सत्वम् यदभावे यदभावः इत्यन्वयव्यतिरेकाभ्यां कार्यकारणभावो धर्मव्यवस्थापि चावसीयते ॥ यथा जपासंनिधाने लौहित्यं भासते जपाभावे लौहित्याभावः इत्यन्वयव्यतिरेकाभ्यां लौहित्यं जपाया धर्मइति ॥ तथा संसार सत्वे दुःखं, संसाराभावे नाम–विषयाभावे, सुखं, यथा सुषुप्त्यवस्थायामिति संसारस्य दुःखरूपत्वं, परमात्मनश्च सुखरूपत्वस्वीकारेणैव विषयेषु सुखाभासोपपत्तौ सांसारिकेषुविषयेषु पृथक्सुखसत्ताकल्पने मानाभावः तथा च शास्त्रोपदेशोपि सांख्यमतइवास्माकमपि समान एव ॥ सांख्यमते आत्मनः स्वरूपं सच्चिद्रूपमेव स्वीकृतम् वेदांतिनये तस्यानंदरूपत्वमप्यधिकं स्वीकृतमिति विशेषः ॥ नन्वात्मनो यथातथा धर्मा भवन्तु परं च सर्वस्य जगतः कथं मिथ्यात्वं कथं च सत्वमितिचेदत्रोच्यते सत्वंहि अर्थक्रियाकारित्वं तच्च मिथ्याभूते शुक्ति रजतेप्यस्ति नहि शुक्तिरजतं दृष्ट्वा तल्लाभलोभलुब्धः सजवं न धावति तच्च लब्ध्वा सुखिनमात्मानं न मन्यते ॥ परं च यदा विशेषदर्शनतः शुक्तिरियं न रजतमिति ज्ञानं जायते तदानीमेवायं तन्मिथ्या मन्यते न प्राक् ॥ ततो ऽज्ञानात्पूर्वं तस्य शुक्तिरजतस्य प्रातिभासिकं सत्वं स्वीक्रियते, तथा व्यावहारिकं सत्वं जगतो ऽस्त्येवेत्यर्थक्रियाकारित्वमुपपन्नम् ॥ नच पारमार्थिकमेवार्थक्रियाकारित्वम् कुतो न स्वीक्रियतइति वाच्यं ॥ तस्याज्ञानमूलकत्वेन बाधितत्वात् ॥ अयं भावः॥ योऽयंप्रत्यक्षतो दृश्यमानो नामरूपाभ्यांव्याकृतः संसारस्तेन कस्तव संबंधः ॥ अभिमान एव ॥ यतो देहादौ प्रथमतः 'तादात्म्याध्यासं' कृत्वा पश्चाद्विषयेषु 'संसर्गाध्यासं' करोति,ततस्तस्याप्त्यप्राप्तिकृते सुखदुःखे आत्मनि समारोपयति । यथा–बाल्ये गृहे क्रीडंती मद्गृहप्रति वेश्मिनीः काचिद्बाला आस ॥ तया सह नानाविधं पर्याक्रीडतो मे मनसि न किंचिद्विक्रिया

ऽजनि ॥ परं च यदा तया सह मम विवाहो जातः ततो मां दृष्ट्वा सा लज्जावत्यभूत ॥ तां च पश्यतो मे मनसि मन्मथविकारा अजायंत॥ तां यदि कोप्यन्यो द्रष्टुं वांच्छति चेत्तदानीमेव मन्नेत्रे क्रोधांधेऽभूतां ॥ अस्य सर्वस्य कार्यजातस्य किं कारणमिति सुधियः सूक्ष्मबुध्या विचारयंतु ॥ विचार्यमाणे ऽवश्यमेतत्प्रतिभाति ॥ नाभिनिवेशादृते ऽस्यानर्थव्रातस्यान्यत्कारणमिति ॥ अयमेवाभिनिवेशो ऽज्ञानं मायेति पदेन व्यवह्रियते तस्माद्देहादौ प्रथमतः तादात्म्याध्यासं कृत्वा संसर्गाध्यासः कृत इति अज्ञानकल्पितमेतज्जगत्–अज्ञानमूलकत्वात् उपरि दर्शितकथानकगतकांताकांताभिमानवत् इति सिद्धं ॥ अपिचानिर्वचनीयत्वमपि मिथ्यात्वगमकमिति तत्र तत्राद्वैतग्रंथे स्फुटीकृतमिति विरम्यते ॥ ततश्चाद्वैतवादिनां मते सकलानर्थव्रातनिवृत्तिपूर्वक स्वस्वानंदावाप्तिर्मोक्ष इति सिद्धं ॥ तस्य कारणं तत्वज्ञानं तच्च ' सत्यं ज्ञानमनंतं ब्रह्म ' एकमेवाद्वितीयं ब्रह्म, नेहनानास्ति किंचन इत्यादिश्रुत्यनुसारि ब्रह्मतत्वविषयकमिति सुधिय एव विदांकुर्वंतु ॥

---

## ( द्वैतवादिना मध्ये रामानुज, माध्व, वल्लभ, निंबारकाणां मते )

तत्र तावत् रामानुजा भेदाभेदवादिनो जीवं कार्यब्रह्मरूपं, परमेश्वरं कारणब्रह्मरूपं मन्वाना इदानीमिव पारमार्थिकमपि द्वैतमेव स्वीकुर्वंति । तत्र च प्रमाणम्भेदाभेदावेव । सर्वेहि पदार्थाभिन्नाभिन्ना वर्तंते ॥ अयं भावः ॥ योऽयं घटोस्ति स कार्यरूपेण भिन्नोपि कारणरूपेणाभिन्नएव। यद्यत्यंतं भेदः स्वीक्रीयते तदा घटपटयोरिव मृत्तिकां विहाय घटस्तिष्ठेत् ॥ अथचात्यंतमभिन्नस्तदा घट इति व्यवहारानुपपत्तिः ॥ एवं च स घटः कार्यरूपेण भिन्नोपि मृत्तिकारूपेणाभिन्नः यथा, । तथायं जीवः परमेश्वररूपेणाभिन्नोपि जीवरूपेणभिन्नएव ॥ एतेन व्यापकरूपेण ज्ञानकांडश्रुतीनां सार्थक्यम् व्याप्यरूपेण कर्मकांडश्रुतीनामपि सार्थक्यमुपपादितं भवति ॥ अन्यथा केवलाद्वैतवादिनां

कर्मकांडश्रुतिविरोधः केवलद्वैतवादिनां ज्ञानकांडश्रुतिविरोधो दुर्वार एव ॥ अस्माकं तु सर्वं सुस्थं ॥ नच मन्मते मोक्षानुपपत्तिः, वैदिककर्माचरणसंशुद्धचेतसो जीवस्य श्रीमद्वेंकटेशपादकमलध्याननिश्चलीकृतचेतसः तत्प्रसादाद्यः सुखप्रादुर्भावः स एव मोक्षः ॥ नच तदानीमप्यैक्यम्, तदानीमपि भेदस्य विद्यमानत्वात् भेदाभेदवादिनोहि वयम् ( माध्वास्तु ) न भेदाभेदपक्षं रोचयंते ॥ किंतु जीवोहि नाम दासः श्रीहरेः सचात्यंतं भिन्नः, दुःखित्वात् नित्यानिर्मलोऽखंडानंतगुणपरिपूर्णो भगवान्नारायणः तद्भक्तिश्चाव्यभिचारिणी मोक्षकारणं ॥ मोक्षोहिनाम निरंतरार्चनभजनादिषड्विधभक्तिसंतोषितस्य श्रीहरेः कृपाप्रसादात्तिरोभूतनिजसुखप्रादुर्भाव एव ॥ नच तत्राप्यैक्यम् नित्याखंडापरिछिन्नपरमात्मानंदाज्जीवस्य तत्कृपालब्धसुखस्य न्यूनत्वात् नच तत्र जीवानां मुक्तानां साम्यम् तत्रापि न्यूनाधिकभावस्यसत्वादिति। अत्यंतभेदवादिनो वयम् (वल्लभास्तु) शुद्धाद्वैतवादिन एकमेव परमात्मरूपं स्वीकुर्वंति नचाद्वैतमतप्रवेशः, तैर्मायायाः स्वीकारात् । एकएव नारायणस्तेन तेन रूपेण परिणमते । नच परिणामित्वाज्जडत्वं, अनंगीकारात् यथा ऐंद्रजालिकः स्वयमेव एकं हस्तं छिनत्ति अन्यं वर्धयत्यत्रकारणं तस्येच्छैव नान्यत्। एवं जीवादिभेदेऽपि परिणामी स परमेश्वरः स्वतंत्रेच्छः तेन तेन रूपेणावतिष्ठते तेन व्यवहारश्च प्रचलति मोक्षस्तु परमवैकुंठनिवासिना सह दिव्यभोगप्राप्तिरेव तथाचोक्तं, “ सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता ” इति श्रुतौ । तत्र च श्रीकृष्णभक्तिरेव कारणमिति वदंति । निम्बारकाअप्येवमेवेत्यलं विस्तरेण ॥

---

## ( एषुपरमपुरुषार्थत्वंकस्येतिविचारः )

धर्मार्थकाममोक्षभेदेन चतुर्णां पुरुषार्थानां मध्ये मोक्ष एव परमपुरुषार्थः ॥ तथाहि । धर्मस्य पुरुषार्थत्वं सुखसाधनत्वेन वक्तव्यं यागजन्येनापूर्वरूपनामांतरेण धर्मेण परलोके सुखं जायते इति सर्वैरप्यास्तिकैरभ्युपेयं ॥ न च स्वर्गसुखमेव निरतिशयं सुखं । ‘ क्षीणे पुण्ये

मर्त्यलोकं विशंति' इत्यादिभिः श्रुतिभिर्यज्जन्यं तदनित्यमित्यादि युक्तिभिश्च तस्यानित्यत्वस्वीकारात् ॥ नच "अपामसोममसृता अभूम" इत्यादिश्रुतिविरोधात्तस्यासत्तर्कत्वमिति वाच्यम् ॥ कल्पक्षयावधिपर्यन्तं तस्यामृतत्वात् एवंच मोक्षसुखस्यैव निरतिशयत्वम् नित्यत्वं च वाच्यम् ॥ तत्र च प्रमाणम् "पुरुषं प्राप्य कालवार्ता न विद्यते" "न स पुनरावर्तते" इत्यादयः श्रुतयः स्मृतयः ॥ न च तस्यापि स्वीकार्यमनित्यत्वं तमुद्दिश्य धर्माचरणस्य विधानादिति सोप्यनित्यः स्यादिति वाच्यम् ॥ अज्ञाननिवृत्तेरेव मोक्षपदार्थत्वात् ॥ नित्यविधिविहितकर्माचरणेन मलिनं चेतः कामक्रोधदोषदूरीकरणपूर्वकं स्वच्छं भवति ॥ तथासति अज्ञानं परमात्मतत्वज्ञानाद्विनश्यति सा अवस्थामोक्षपदेन व्यवह्रियते ॥ एवंचैकविंशतिदुःखध्वंसपूर्विका या स्वानंदाव्याप्तिः सैवमोक्षः तत्र च कामक्रोधादिरूपमलनिर्धूननद्वारा धर्मस्य प्रयोज्यत्वान्मोक्षस्यैव परम पुरुषार्थत्वम् ॥ एवमर्थस्यापि। अर्थोपि मोक्षसाधकेयज्ञसाधनत्वेन कांक्ष्यते अत्र च प्रमाणं च "अथ जाया मे स्यात् प्रजायेयेति" "अथ वित्तं मे स्यात्कर्मकुर्वीयेति श्रुतिः॥" नच लौकिकसुखार्थत्वेन तस्य पुरुषार्थत्वं। शक्यम् ॥ तस्य च प्रागेव सविषान्नवद्धेयत्वेन पुरुषार्थत्वाभावात्। कामस्यापि प्रजासाधनत्वेनेष्टत्वात् तस्याः (प्रजायाः) संप्रतिपत्ति प्रयोजकत्वेन परम्परया मोक्षरूपसाधनत्वेन तस्य परम्परया मोक्षसाधनत्वात् ॥ मोक्षस्य तु इतरेच्छानधीनेच्छाविषयत्वात्तस्यैव परपुरुषार्थत्वम् ॥ धर्मकामार्थानां तु मोक्षेच्छाधीनेच्छाविषयत्वात्तस्यापरमपुरुषार्थत्वम् तत्रापि धर्मार्थकामानां मध्ये धर्मस्यैव मुख्यार्थत्वं । तथाहि । अर्थस्य कामनाहि परमसुखरूपमोक्षसाधकधर्मसाधनत्वेनकार्या । अन्यथा यदि स्वेच्छावर्तनार्थं द्रव्यं कामयेत् तदा तदधर्मायैवेति तस्य नरकप्राप्तिरेव नियता ॥ तथा च धर्मसाधनायैवार्थकामनेति तस्यापि धर्मसाधनतया धर्मापेक्षया गौणं पुरुषार्थत्वं ॥ एवं कामोपि धर्मार्थ एव। पुत्रोत्पादनार्थं हि पत्न्यासाकं विधीयमानः कामः स्वस्य मोक्षप्रदातृत्वेन धर्मं जनयति ॥ अयं भावः। यथा विधानं पुत्रमुत्पाद्य यदि सम्प्रातिपत्ति

कर्म क्रियते चेत्तस्य कर्तुरात्मनि—संस्कारमुत्पाद्य समष्टिरूपेण-ब्रह्मलोक-प्राप्तिरूपमोक्षं विदधाति नच कामो नाम यथेच्छं संचारः ॥ तथासति नानाविधकुकर्मकारित्वादधर्मबाहुल्यमेवार्जितं—स्यान्नतु धर्मलेशोपि—तथासति पापिभिर्योग्या गतिर्लभ्येति नाधोगति स्तस्य सुलभा स्यात् तस्मादिदं सिद्धं कामोपि मोक्षं कुर्वाणो—धर्मद्वारमपेक्षते इति ॥ ननु—धर्ममोक्षयोः क्रमादस्तु गौणपरमपुरुषार्थत्वम् कामार्थयोस्तु तत्कथमिति चेच्छ्रूयताम् ॥ अर्थेसति कामस्य जायमानत्वात् पूर्वमर्थः प्रतिपादितः श्रुतौ ॥ इतिसामान्यतोर्थः प्रतिपादितः विशेषश्चैषां—कार्यकारणभावे निरूपयिष्यामः—

---

## ( धर्मार्थकाममोक्षाणां कार्यकारणभावविचारः )

मनुष्योहि—जायमानस्त्रिभिर्ऋणैर्युक्तो जायतइत्यादि श्रुतिपर्यालोचनादज्ञान मनादीति—तस्य क्षयार्थं प्रथमतो धर्माचरणं कर्तव्यं ॥ एतदेवाभिप्रेत्य ब्रह्मचर्याश्रमे वेदाध्ययनादीनां कर्मणां विधानात्—एवंच तत्र विहितानां यथाविधानमाचरणात् प्रकृष्टो धर्मोऽभिजायते । तेन पूर्वजन्मदुरितं सर्वमपि नश्यति ॥ अग्रे जायमानानां कामानामभिवृद्धिर्जायते ॥ तथाच सिद्धं धर्मस्य सर्वपुरुषार्थमूलत्वम् एतदेवाभिप्रेत्योक्तेषु चतुर्षु पुरुषार्थेषु प्रथमतो धर्मस्योपादानं कृतम् ॥ न च अल्पाच्तरमित्यनेन—पूर्वनिपातः॥ सर्वेषामेवहि—समानाच्कत्वेन विशेषाभावात् ॥ जाते धर्मे यदि स प्रकृष्टः शुद्धः श्वेतः स्यात् तदा विरक्तः स मोक्षधर्ममेवाश्रयते ॥ तदुक्तम् । यदहरेव विरजेत्तदहरेव—प्रव्रजेत् ॥ तथाचार्थकामौ त्यक्त्वा स शुद्धसत्वः साक्षादेवकैवल्यं लब्ध्वा कृतकृत्यो भवति ॥ यस्य तु वासना नापैति—नात्यंतं वैराग्यमस्ति तेन तादृशशुद्धधर्मोत्पादनाय यागादयः कर्तव्या एव ॥ नहि वासनानां भोगादृते क्षयः ॥ नच तत्वज्ञानात्क्षयः, तथाचोक्तम् “ यथैधांसि-समिद्धोग्निर्भस्मसात्कुरुतेऽर्जुन ” इत्यादिगीतास्वितिवाच्यम्, समुदाचरद्रूपवृत्तीनां वासनानां हि भोगात्तपसा च क्षयोनाम क्षीणभावः कर्तव्यः जातासु क्षीणासु वृत्तिषु तासां ज्ञानेन निर्मूलनं भवति । अत-

४

स्तादृशधर्मोपेक्षणीयः । तादृशधर्मोदयार्थं अर्थकामौ वेदविहितकर्मा-विरोधेन सेवनीयाविति तावपि पुरुषार्थौ परमार्थतश्च धर्मः प्रथमतो पेक्षणीयोऽज्ञाननिवृत्यर्थमिति–प्रथमतः उपदिष्टः ॥ परमः पुरुषार्थो मोक्ष इति दर्शनार्थं च तस्य च परमोपदेशः ॥ अन्यौ च गौणौपुरुषार्थौ विति सर्वमवदातम् ॥ सर्वथा यथातथा वा भवतु परंच सर्वेषां दर्शन-काराणां मते मोक्षो नाम सकलदुःखध्वंसपूर्विका या स्वानंदावाप्तिः सैवेति सिद्धं तस्य–परमपुरुषार्थत्वम्—

---

## ( इमे आर्यधर्मस्य मूलतत्वतां भजन्ते नवेति विचारः )

एते हि धर्मार्थकाममोक्षाः पुरुषार्थाः आर्यधर्मस्य मूलभूता एव। यथाहि–महद्गृहं चिकीर्षुः पूर्वं तस्य मूलं सम्यक् स्थापयति ॥ दृढे च मूले सर्वगृहं दृढं–भवति– । तथास्य सकलस्य स्थावरजंगमात्म-कस्य जगतः इष्टानिष्टलाभपरिहारकारणं कर्मजातमुपदिशतो–वेदराशे-र्मूलं हि पुरुषार्थचतुष्टयमेव । पुरुषार्थमुद्दिश्य हि सर्व एष आर्यधर्मो– वेद-रूपेणेश्वरेणोपदिष्ट इति सर्वेषां–आस्तिकानां मतं ॥ कथं हि तेऽस्यार्य-धर्मस्य मूलभूताः–कथंचैनं तत् पुरुषार्थचतुष्टयमुद्दिश्य वेदेन तानि. तानि कर्माणि विहितानीति विस्तरेणोपपादयामः । सकलजगत्प्रमाणी-भूतेन वेदेनानुशासनसौकर्यार्थं तत्तदधिकारियोग्यतानुसारेण च-त्वारो वर्णा स्तत्रापि चत्वार आश्रमाः कल्पिताः ॥ तत्र च द्विजाना-मेवैष आश्रमविभागः न शूद्रस्य तस्य सर्वकर्मबहिष्कृतत्वात् ॥ तत्र किङ्कारणमिति तु चातुर्वर्ण्यविचारे ऽतिनिपुणमुपपादयिष्यामः । तत्र "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते" इतिवचनात्–येषां संस्कारयोग्यता तेषामेव द्विजत्वं न सर्वेषाम् ननु–उक्तवचनेन शूद्राणा-मपिद्विजत्वं संस्कारात्प्राप्नोतीति चेन्न "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यादि वचनपर्यालोचनया यस्यपूर्वं द्विजकुलोत्पन्नत्वं नाम–द्विजशुक्रशोणितोत्पन्नत्वम् तस्यैव द्विजत्वम् नान्यस्येति गम्यते ॥ पूर्ववचनेतु शूद्रशब्दो लाक्षणिकः । यथाग्निशब्दो माणवके प्रयुक्तः तत्सादृश्यमालंबते एवं शूद्रसादृश्यं प्रकृतेऽनुपनीते ब्राह्मणबालके

बोधयति—" तच्च सादृश्यं कर्मानुपयोगित्वरूपं-आस्तामयमप्रकृतविचारः। तथाच-द्विजानुद्दिश्य 'ब्रह्मचारि' 'गृहस्थ' 'वानप्रस्थ' संन्यासः' इति चत्वार आश्रमा उपदिष्टाः॥ ते च द्विजाः ब्राह्मण, क्षत्रिय, वैश्य, भेदेन त्रिविधाः। ब्राह्मणस्य-प्रकृत्या-शुद्धसत्वस्याध्यापनम्, प्रतिगृहश्च नियतम् विहितमन्यानि च साधारणानि कर्माणि—

तथाच मनुः—अध्यापनमध्ययनं यजनं याजनं तथा॥
दानं प्रतिगृहं चैव ब्राह्मणानामकल्पयत्॥ १-८८-

तथा क्षत्रियाणां बलिष्ठत्वाद्रजोगुणाधिक्याच्च सर्वजगत्पालने तेषामधिकारः—

प्रजानां रक्षणं दानमीज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥-१-८९

वैश्यानां रजोगुणस्य बाहुल्यात्तमसश्चोद्रेकाद्वाणिज्यम्, कुसीदग्रहणमेव प्रधानम्॥

तथाच मनुः—पशूनां रक्षणं दानमीज्याध्ययनमेव च॥
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च॥-१-९०-

उपरिनिर्दिष्टस्मृतीनां वचनपर्यालोचनया तादृशतादृशकार्योपयोगिगुणाधिक्यात्तानि तानि कर्माणि संविधाय ते ते वर्णा भगवतैव विरचिता अनादय इति नो मतम्, तदुक्तं-गीतायाम् " चातुर्वर्ण्यं मया प्रोक्तं गुणकर्म विभागशः " इति॥ आस्तामिदं विवेचनमेतावदेव। पश्चाच्चातुर्वर्ण्यविचारे-विवेचयिष्यामः। तथाच। ब्राह्मण क्षत्रिय विट् प्रभृतिषु त्रिषुवर्णेषु ते आश्रमाश्चत्वारो विहिताः तदुक्तं मनुना—ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा॥ एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रयाः इति— १-८७—तत्र प्रथमः॥ अष्टवर्षं ब्राह्मणमुपनीय तं साङ्गं वेदमध्यापयतियः सः आचार्यपदवाच्यः तदुक्तम्—

उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥-१-४०
एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः॥
योऽध्यापयति वृत्त्यर्थं उपाध्यायः स उच्यते-१-४१

निषेकादीनि कर्माणि यः करोति यथाविधि ॥
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥-१-४२

तत्राष्टवर्षपर्यंतं बालकस्य स्वगृहे वासो युक्तोऽतःपरं तस्य गुरुगृहे वेदाध्ययनार्थं वासो वेदेन विहितः ॥ तत्र चोपनयनम् तेनैव वेदाध्ययनकारयित्रैव कर्तव्यमित्युत्तमः पक्षः ॥ इदानीं तादृशगुरोरलाभात्पितैव सावित्रीमुपदिशति ॥ अस्तु ततः उपनयनानंतरं प्रत्यहं भिक्षाटनं शौचमध्ययनं अग्निकार्यंच कुर्वता तेन ब्रह्मचारिणा प्रतिवेदं द्वादशवर्षपर्यंतं ब्रह्मचर्यव्रतं पालनीयम्, तदुक्तम् ॥

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ॥
तदर्धिकंपादिकं वा ग्रहणांतिकमेव वा ॥ ३-१—

तत्र यावदध्ययनं तेनाष्टविधमैथुनप्रतिषेधः कार्यः तत्र स्याश्रमस्य स्वरूपप्रतिपादकाः केचनश्लोकाः स्पष्टप्रतिपत्तये नूद्यन्ते—

उपनयनकालः—गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ॥
गर्भादेकादशे-राज्ञो गर्भात्तु द्वादशे विशः ॥-२-३६

भिक्षाटनम्—प्रतिगृह्येप्सितं दण्डमुपस्थायच भास्करम् ॥
प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि ॥-११-४८-

गुरुनिवेदनम्—समाहृत्य तु तद्भैक्ष्यं यावदर्थममायया ॥
निवेद्यगुरवेऽश्नीयादाचम्य प्राङ्मुखास्थितः ॥—

गुरोर्नियोगः—उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ॥
आचारमग्निकार्यं च सन्ध्योपासनमेव च- ६९-

इन्द्रियनियमः—इन्द्रियाणां विचरतां विषयेष्वपहारिषु ॥
संयमे यत्नमातिष्ठेत् विद्वान्यंतेव वाजिनाम् ८८
एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ॥
कामाद्धि स्कन्दयन् रेतो हि नास्ति व्रतमात्मनः ॥ १८०
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ॥
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ १८

नित्यकर्म—अग्नीन्धनं भैक्षचर्या मधःशय्यां गुरोर्हितम् ॥
आसमावर्तनात्कुर्यात् कृतोपनयनो द्विजः ॥ १०८-

वृद्धाभिवादनम्–अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ॥
चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोबलम् ॥ १२१-

आहारनियमः–वर्जयेन्मधुमांसं च गन्धं माल्यं रसान्स्त्रियः ॥
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् १७७-

इत्याद्यनेकविधानेन विहितो ब्रह्मचर्याश्रमः प्रथमतो मूलम् सर्वस्य जीवनस्य ॥ योहि बाल्ये यथेच्छाचारी तस्य जीवनमेवाल्पं स्यात् ॥ तत्रापि रोगबाहुल्यं स्वल्पायुः सन्ततिः स्वयमध्ययनाभावादर्थमनाप्नुवन्नाधिपीडितः कथंसुखेन जीवेत् ॥ यो हि कृषीवलः पूर्वं साधुबीजं वा पार्थे स्थापयति ॥ अथ च कृषिं यथाविधि कर्षयित्वा काले च तस्यां बीजं वपति स प्रचुरं धान्यं शरदि लभते यस्तु बीजमेव भक्षयति तस्य कुतो वर्षपर्यन्तमन्नमिति सुधिय एवावगच्छन्तु तथाचायं ब्रह्मचार्याश्रमः सर्वेषामग्रिमाणामाश्रमाणामतीवोपकारकः इति प्रथमं स्थापितः। तत्र च सर्वजीवनसाधनं वीर्यं प्रभूतं प्रतिबंधादुपचीयते वीर्योपचये बुद्धिर्वर्धते बुद्धिवृद्धौ विद्या समीचीना सुक्षेत्रस्थापितालतेव फलति। विद्याफलं च वित्तं ज्ञानं च तथा च लौकिके नावित्तेन पुण्यकर्माण्यनुष्ठीय पारलौकिकं सुखं जायते। वेदविज्ञानेन च यागाद्यनुष्ठानं ततः शुद्धः फलोदयः सन्ततिश्च सदृढा तेजस्विनी सुमेधाविनीति सर्वं सुखमयं जगत् ॥ अन्यथा अखिलं दुःखमयमिति स्पष्टमेवेति संक्षेपतः प्रथमाश्रमविचारः—

---

## ( अथ गृहस्थाश्रमविचारः )

तत्रोक्तप्रकारेण ब्रह्मचर्याश्रमं सम्यक्प्रतिपालयन् गुरुणादत्ताज्ञः स्नातको भवेत्—

तथाचोक्तं मनुना–वेदानधीत्य वेदौवा वेदं वापि यथाक्रमम् ॥
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥ ३-२-
गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ॥
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्वितां ॥-२-४

तत्र च कन्यायाः शुभाया लक्षणानि यानि प्रदर्शितानि मनुना तानि न स्वस्य प्रीतये यथा लोके साम्प्रतं समीचीनां कन्यामुद्वाहयन्ति स्वप्रीत्यै–नान्यत्तत्र कारणम् तथा न किं तु कुलीनापत्योत्पादनार्थम्। यथास्यां जायमानः पुत्रो लोक्यो भवेदेतदर्थम्॥ अथ ऋतुमतीं जायां प्रति न सर्वदागमनम्, किंतु नियते दिनएव॥

तदुक्तम् मनुना–ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडशस्मृताः॥
चतुर्भिरितरैः सार्धं महोभिः स्याद्विगर्हितैः॥ ४६
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या॥
त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः॥ ४७
युग्मासु पुत्राजायन्ते स्त्रियोऽयुग्मासु रात्रीषु॥
तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्॥ ४८

एवं विधानेन स्त्रियमुपगच्छन्नपि सोऽखण्डब्रह्मचर्येव भवति॥

तदुक्तम्, मनुना–निंद्या वष्टासु चान्यासु स्त्रियोरात्रिषु वर्जयन्॥
ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन्॥ ३–५०

अयं ह्याश्रमः सर्वेषां पोषकः सर्वे ऽन्येआश्रमाः एतमुदरभरणार्थ माश्रयन्ते। तस्मादत्रापि धर्मबाहुल्यमस्त्येव॥ एतदर्थमत्रातिथिसत्कारो विशेषतो विहितः॥ सर्वेभ्यो बलिदानंच विशिष्य विहितम्॥

तदुक्तम् मनुना—भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम्॥
वेदतत्वार्थविदुषे ब्राह्मणायोदपादयेत्॥ ९६

यद्यपि नास्ति वैभवं तथापि यथाशक्ति सर्वैः सत्कार्य एवातिथिः॥

तदुक्तम् मनुना— तृणानि भूमिरुदकं वाक्चतुर्थीच सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाच न॥ १०१

तत्रायं ब्राह्मणएवातिथिः नान्यइति विचारणापि नकार्या—

तदुक्तम् मनुना—वैश्यशूद्रावपिप्राप्तौ कुटुम्बे ऽतिथिधर्मिणौ॥
भोजयेत्सहभृत्यैस्ताव नृशंस्यं प्रयोजयन्॥ ११२–

एवंप्रकारेण जीवनं यापयतः श्रोत्रियस्य गृहे वसतिरपि नियतैव—

चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः ॥
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥ ४-१

तत्रापि लोभादधिको भूतद्रोहेन धनसंचयो न कार्यः—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ॥
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥ ४-२
यात्रामात्रप्रसिध्यर्थं स्वैः कर्मभिरगर्हितैः ॥
अक्लेशेन शरीरस्य कुर्वीत धनसंचयं ॥ ४-३

सेवाविषयेऽतीवनिषेधः-सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्॥ ५६
कुसूलधान्यको वापि कुम्भीधान्यक एव वा।
त्र्यहैहिकोवापि भवेदश्वस्तनिक एव वा ॥ ५७ ॥

धन्यास्ते लोकाः धन्यः सधर्मो यत्रातिथीनामीदृशी पूज्यता तत्र किं यत्सुखं स्यात्। यत्र निर्लोभतापि अनिर्वचनीया ॥ इदानीं तु परस्पर द्रव्यलुण्ठनतत्परा जनाः स्वकर्मणा गृध्रानपि लज्जापयंति आस्तां तावत्पश्चादेतद्भविष्यति, तदेवं प्रत्यहं वेदं पाठयन् शास्त्रार्थं विचारयन् सर्वानतिथीन्पूजयन् ब्राह्मणो यथाशक्ति यागाननुतिष्ठेत् तत्र लब्ध-धर्मप्रचयो यदावलीपलितं स्वस्य पश्यति तदा वानप्रस्थो भवेत्—

तदुक्तम्—एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ॥
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ॥ ६-१-

---

## ( अथ वानप्रस्थविचारः )

तस्य च विधिः—सन्त्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् ॥
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ ६-३

अन्नविधिः—मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ॥
एतान्येव महायज्ञान्निर्वपेद्विधिपूर्वकम् ॥ ६-५
वसीत चर्मचीरं वा सायं स्नायात्प्रगे तथा ॥
जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ॥ ६-६

न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥
न ग्रामजातान्यार्तोपि मूलानि च फलानि च ॥ ६-१६

तत्राप्यतिथिसत्कारः-यद्भक्षं स्यात्ततो दद्याद्बलिं भिक्षां च शक्तितः ॥
अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥—६-७

व्रतविधिः—भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् ॥
स्थानासनाभ्यां विहरेत् सवनेषु पिबन्नपः ॥ ६-२-

एवं हि कर्म समाचरतो द्विजस्य वेदवेदार्थविदोऽवश्यं वासना क्षीणा भवन्ति ॥ तत्रापि भोजनादिनियमाश्चाधिकं क्लिष्टाः क्रियन्ते ॥ येन तस्य धातूद्रेको न भवेत् ॥ धातूद्रेके पुनरिन्द्रियग्रामो बलवान् जायेत् ॥ एवं जाते च क्षीणे धातौ तस्य संन्यासाधिकारः तादृशाधिकारपरीक्षार्थं काश्चन विधाः प्रदर्शिताः—

अग्नीनात्मनि वैतानान्समारोप्य यथाविधि ॥
अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ॥ ६-२५

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान्वने वसन् ॥
प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ ६-२८

एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् ॥
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥

एवम्परीक्ष्यात्मवासनाः सर्वासामासां क्षयमवेक्ष्य तदनन्तरं प्रव्रजेत् ॥

---

## ( अथ संन्यासाश्रमविचारः )

तस्य कालः—वनेषु च विहृत्यैवं तृतीयं भागमायुषः ॥
चतुर्थमायुषोभागं त्यक्त्वा संगान्परिव्रजेत् ॥ ६-३३

एतावत्पर्यंतं केवलेन स्मार्तवचनजातेनार्यधर्मस्य मूलभूतं पुरुषार्थचतुष्टयमिति समर्थितम्, इदानीन्तु युक्तितोपि तदेव मूलमिति समर्थयामः ॥

लोके हि सर्वेपि लोकाः सुखं कामयमाना दृश्यंते तच्च सुखं वैषयिकमेव तावद्भवतु ॥ तस्य कारणं च शरीरम् यद्यद्धि सुखं जायते लौकिकं, तद्धि सर्वं शरीरावच्छेदेनैव जायते ॥ कामं वदन्तु देहातिरिक्तात्मवादिनो न शरीरमात्मा ॥ तथापि तस्य सुखदुःखे तु शरीराधीन एव। यत्किंचिदपि शरीरं जराक्रान्तं चेत्तदानीमात्मानं दुःखिनं मन्यते तस्मात्सर्वासु सम्पत्तिषु शरीरसम्पत्तिः श्रेष्ठेति निर्विवादम् ॥ तस्यां सत्यां चणका अप्यमृतायन्ते असत्यांचामृतमपि विषायते—सा च तदारम्भकशुक्रशोणिताधिक्यजा ॥ नहि मृत्तिकायामसमीचीनायां समीचीनो घटो भवति ॥ तथाच—ब्रह्मचार्याश्रमस्यावश्यकतास्तीति निर्विवादम् ॥ नच येषां देशे चातुर्वर्ण्यमाश्रमव्यवस्थापि च नास्ति तेपि दृढशरीरयष्टयो दृश्यन्ते तथाचाहारादिबाहुल्ये भवति शरीरं सुदृढमिति किं ब्रह्मचर्याश्रमस्यावश्यकत्वमिति वाच्यम् ॥ यथा मृत्तिकापि समीचीना तत्कर्तापि कुशलश्चेत् घटः सर्वाङ्गसुन्दरो जायते नैवं केवलायांमृदि नापि केवले कुंभकारे। अस्मिन्समये दृश्यन्ते यवनादयः आश्रमाचारविहीनाः सुदृढाः परंच ते केवलमाहारसौख्येनैव ॥ यदा तु अस्माकमाचारवतां यदि तादृशो ऽभ्यवहारो लभ्येत तदा वयमपि यवनादीनतीत्य शरीरबलेन भविष्यामः ॥ साम्प्रतं तु दुर्भिक्षपीडिता सर्वा वसुंधरा ॥ तथापि शरीरेण वयं दृढा एवेति अवश्यमाश्रमाचारस्य शारीरसम्पत्तौ कारणत्वम् स्वीकार्यम्, एवं विद्यापि संसारस्थितावावश्यकी नहिविद्याविहीनं कोपि पृच्छति नापि द्रव्यस्य कणिका तेनलभ्यते अलब्धे द्रव्येतु कथमग्रिमाः पुरुषार्थाः इति तत्प्राप्तिरावश्यकी सा पि अस्मिन्नाश्रमे जायते ॥ ततश्च धर्ममस्मिन्साचिंत्य गार्हस्थो ऽर्थकामौ धर्माविरोधेन लब्ध्वा वानप्रस्थे मोक्षाधिकारयोग्यतां सम्पाद्य सर्वत्र धर्मप्रवृद्धधर्मा संन्यासी भूत्वा निर्ममो ऽन्ते मोक्षं लभते इति युक्त्यापि सिद्धम्, मोक्षे हि अवश्यं कारणं जगति ममत्वाभावः॥ स च तस्य मिथ्यात्वकथनेन श्रुतिपाठनकाले एव ब्रह्मचारिणा ज्ञायते ततश्च यथाकथंचित्पूर्णवैराग्योत्पादनाय गार्हस्थ्यं वानप्रस्थ्यं निषेव्य संन्यासाश्रमे तस्य मुक्तिर्जायते ममत्वाभावादितिस्पष्टमेव—इत्यलम्—

---

## ( एते चातुर्वर्ण्यप्रयोजका नवेति विचारः )

तत्र संसारे चत्वारो वर्णा मुख्याः सन्ति—ब्राह्मण क्षत्रिय वैश्य शूद्र भेदेन। एतत्खलु चातुर्वर्ण्यमनादि। संसारस्यानादित्वात् तत्र विद्यमानं चातुर्वर्ण्यमप्यनादीति पुरस्तादपि एवमेव तिष्ठेत्। कस्मिंश्चित्काले तदल्पं दृश्यते कुत्रचित्काले तदधिकं स्पष्टतया प्रतिभाति। नैतावता तत्समूलं विनश्येदिति ॥ तथाच तदेतच्चातुर्वर्ण्यमुद्दिश्य ते ते-धर्मा मन्वादिभिर्मुनिवरैः कथिताः। नतेपि कस्यचिद्द्वेषकारिणः प्रमाणाभावादिति तैर्विहितम्, धर्ममनुतिष्ठच्चातुर्वर्ण्यं लभते च यथाधिकारं धर्मार्थकाममोक्षरूपं पुरुषार्थचतुष्टयमिति भवन्त्येते चत्वारश्चातुर्वर्ण्यस्य मूलम्—

तदुक्तम् मनुना—श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ॥
इहकीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ –१–९–

एतच्चातुर्वर्ण्यं गुणकर्मानुरोधेन विहितमिति संभावयामः तथाहि—ब्राह्मणस्य खलु अध्यापनं प्रधानं कर्म। अध्यापनं हि प्रकृष्टसत्वैः क्रियमाणं शुभं भवति ॥ अन्यथा स्वयं मूर्खाः अज्ञानान्धकारपरिपूर्णचित्ताः किं परेषामज्ञानं दूरीकुर्वन्ति। नह्यन्धकार एवान्यमन्धकारं दूरीकर्तुं नाशयितुं वा समर्थः ॥ तस्मात्प्रकृष्टसत्वा इमे ब्राह्मणाः इति तानध्यापनकर्मणि न्ययुङ्क्त भगवान्वेदनारायणः—

तदुक्तम् मनुना—अध्ययनमध्यापनं यजनं याजनं तथा ॥
दानं प्रतिग्रहं चैव ब्राह्मणाना मकल्पयत् ॥ १–८८–

इदं युक्तमेव। विद्या हि मनुष्यस्य परमं बलम्। विद्यायाः अभावे स मनुष्योपि शृङ्गपुच्छविहीनः पशुरिति सर्वेपि शिष्टाः शास्त्रकारिणश्च मन्यन्ते ॥—

तदुक्तम्—बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ॥
इति घोषयतीवोच्चै र्हस्तिस्कन्धगतो नरः ॥ १ ॥

सर्वस्य जगतश्च क्षेमाय चातुर्वर्ण्यं कल्पितं। ऐहिकं क्षेमं नाम लौकिकावर्थकामौ पुरुषार्थौ येन येन कृतौ तेन तेन भोक्तव्याविति

व्यवस्था सा च जगति दुर्जनानां वाहुल्यान्न सहसा जायते इति राजशक्तिरपेक्षिता इति जगत् राष्ट्रपदवीं प्राप्तम् ॥ तच्च राष्ट्रमपरेण केनाचिल्लुब्धेन बलवता राष्ट्रेणापन्हीयेत अतः स्वस्य स्वातन्त्र्यार्थं प्रत्येकेन राष्ट्रेण विद्या अवश्यं वर्धनीया यस्मिन्राष्ट्रे विद्या सम्यक्-पालिता भवति तद्राष्ट्रं वर्धते. अन्यथा ऽपक्षीयते इदं सर्वेषां नः प्रत्यक्षमिति किमुदाहरणदानेन ॥ एवं च शासकराजशक्तेर्मूलमपि विद्यैव ॥ विद्याभावे राजशक्तिः क्षणमात्रमप्यवस्थातुं न शक्नोति। यदा हि राजा विद्वत्समुदायद्वेषी स्वयं विद्याहीनो जायते ॥ अथ कुमार्गेण प्रवर्तते प्रवर्तमाने च राज्ञि कुमार्गेण सर्वा अपि प्रजाः राजा-नुसारिण्यः कुकर्मनिरता जायन्ते तदानीं मानिनो रोषज्वलदन्तरा नी च जनावमानिता अवश्यं कंचन् स्वकीयं परकीयं वा राजानं चिकी-र्षन्ति अस्यांचावस्थायां महति कलहे जायमाने बलवता केनचिद्राज्ञा ऽभिहन्यतेचेत्तदा तद्राष्ट्रं नश्यति किंवा बलवता विदुषा राज्ञा बला-दपन्हीयते। अत्रार्थे निदर्शनं भारतभूरेव। एवंच सर्वस्यानर्थस्याऽविद्यैव मूलम्, सा च विद्यया हातव्येति विद्या सर्वैः पालनीया ॥ तद्रक्षणे च सावधाना अत्युत्तमाः सेवकाः स्थापनीया इत्यावश्यकत्वे ब्राह्मणा एव तत्पालने तत्प्रचारे श्रेष्ठा इत्यालोच्य भगवता ब्राह्मणानियुक्ताः —

"अत एव 'वर्णानां ब्राह्मणो गुरुः' इत्यादीनि वचनानि सार्थकानि ॥ दुर्बला हि ब्राह्मणा जातिः बहुफलदेत्यालोच्य (ब्राह्मणो न हन्तव्य.) इति पृथक् निषेधः कृतः। अस्या जाते र्योगक्षेमाय प्रतिग्रहाधिकारः स्थापितः अन्यस्य च प्रतिषेधः। तथा यथा विद्या योगक्षेमायावश्यकी तथा राजशक्तिरपि शासनार्थम् ॥ शासनं नाम शिष्टानामनुग्रहो दुष्टानां निग्रहः-तच्चदण्डेन विना न भवति ॥ 'न हि दुष्टो जारो लुण्ठको वा यथा राजशासनाद्बिभेति तथा पारलौकिकान्नरकदुःखात्, तत्कस्मात्नरकज्ञानाभावात्। नहि यथा दुर्बलमायान्तं ब्राह्मणं संचितद्रव्यं प्रति तस्करो लुण्ठति 'नापि तेनाक्रुष्टो "नरकं यास्यसि मां हत्वा, महामोहान्धकारे घोरे नरके वर्ष-शतं पतिष्यसीति" तूष्णीं तिष्ठति; किंतु हन्ति। तथा अपकारिणं

दुर्बलमपि राजपुरुषं ( पोलीस ) न पीडयति । कस्मात्—। यदाहि तं पीडयितुमिच्छति तदानीमेव—तस्याग्रे—तत्कारागृहमनेकयातनाधरीकृत-यमसदनं प्रादुर्भवति ॥ तस्माददृष्टसुखदुःखप्राप्तिपरिहारयोर्यतमानाः । प्रायेण सर्वे ऽतो राजशक्तिरपेक्ष्यते । सा च साक्षाद्दण्डधारिणी न दुर्बला दण्डेन दण्ड्यान्दण्डयितुं शक्नोति प्रत्युत सैव तैर्दुर्जनैराहन्यते॥ महानपि दण्डः स्वप्रेरयितारं बलवन्तमपेक्षतएव ॥ नहि सुवर्णमत्युत्तममपि कुशलिनं सुवर्णकारं विना स्वयमेवात्युत्तमालंकाराकारेण परिणमते तथैव यदि बलवानपि मनुष्यः परन्तु दण्डएव दुर्बलः तथापि शासितुं न शक्नोति ॥ एवं च दण्डोपि समीचीनस्तत्प्रेरकश्चातिबलवान् तदा कार्यं जायते इत्यालोच्य—तादृश—दण्डधारणे बलवती क्षत्रियजातिः भगवता योजिता ॥ यथा शासनार्थं क्षत्रियजातेरपेक्षा एवं वैश्यस्यापि—॥ नहि धनमन्तरेण विद्या वा प्रभुशक्तिः स्फुरति ॥-मध्यान्हकाले द्रव्येण शून्या महाविद्वांसोपि, तथा ॥ मल्लादयोऽपि बलिष्ठा अपि दीनायमाना उदरंभरणार्थमितस्ततो व्याहिण्डमानाः प्रायशो नः सर्वेषां प्रत्यक्षाः ॥ यस्य राज्ञः सकाशे द्रव्यं नास्ति तस्य जातोपि विजयो नाचिरं तिष्ठति ॥ नहि पदातयो वचनमात्रेण सन्तुष्यन्ति ॥ मनुष्यमात्रत्वाविशेषेपि सेवको राजानं सेवते तस्य नानाविधान्कुशब्दान्सहते तत्र कारणं द्रव्यमेव ॥ यदि तत् तस्मान्न लभ्यते तदानीमेव स सेवको तं विहायान्यत्र प्रयाति ॥ एवं पण्डितस्यापि नित्यव्यवहारार्थं द्रव्यमेवाकांक्षितं ॥ नहि आपणिकोऽयं महान् पण्डितः षट्शास्त्रसम्पन्नः वेदपारगः अतितीव्रप्रज्ञः इति मनसिकृत्वा ददाति तस्मै तण्डुलान्, किन्तु, श्रवणमनोहरध्वनिं चाकचक्ययुक्तं रूप्यकं वीक्ष्य, द्रव्ये लब्धे स्वस्थे चेतसि पण्डितानां प्रज्ञा किंचित्प्रचलति । अन्यथा पण्डितोऽप्यपण्डितायते तस्य प्रज्ञापि मृतेव न चेष्टते॥ तस्य सम्पादनार्थं वैश्यवर्णोप्यपेक्षितः तेन परद्वीपं गत्वा जलमार्गेण वा स्थलमार्गेण वा व्यापारः कार्यः ॥ कुसीदंच ग्राह्यम् ॥ तेन—वैश्यवर्गेण स्वरक्षणार्थं कश्चिदंशो राज्ञे देयः ॥ तेन च व्ययं कृत्वा रक्षा कार्या अथ च विदुषां पालनं कार्यम् एवं सर्वेषु स्वकार्यकारिषु तेषां

सेवा केन कर्तव्या तैरेवेति चेत्तेषामतीवश्रान्तत्वान्न स व्यापारः समीचीनः स्यादिति तदर्थं शूद्रवर्णोऽप्यपेक्षणीयः ॥ एवं च ब्राह्मणैर्विद्या कर्तव्या क्षत्रियैः पृथिवीपालनम् वैश्यैर्द्रव्यार्जनम् शूद्रैः सेवेति सर्वेषामेवास्ति परस्परमपेक्षेति वस्तुतो न न्यूनाधिकभावः ॥ लोके तु–तस्य–तस्य कर्मणो योग्यतया व्यवहारो दृश्यते क्वचिच्छास्त्रेऽपि । यथा दण्डधारिणमारभ्य प्रधानपर्यन्तं सर्वेपि राजपुरुषा एव परंच तेषां तारतम्यम्, वेतनस्य न्यूनाधिकभावः मानमर्यादा यथा विशेषतो वर्तते तथा प्रकृतेपि नैतावता वैषम्यम् ॥ नहि प्रधानस्य यादृशी मर्यादा तादृशी ममाप्यस्तु इति–मनसि कृत्वा कंचुकी तं द्वेष्टि द्विषन् वा श्रेयो लभते ॥ तथा प्रकृतेपि न शूद्रेण ब्राह्मणो द्वेष्यः तथाच–लोकस्य भूतिमिच्छता भगवतैतच्चातुर्वर्ण्यं विधाय–तं तं-वर्णमुद्दिश्य ते ते धर्मा विहिताः ॥ तैर्धर्मैर्वर्तमानस्य नरस्य पुरुषार्थचतुष्टयस्य चातुर्वर्ण्यमूलत्वमित्यस्मत्सिद्धान्तः ॥ अत्र केचित् (दयानन्दमतानुयायिनः) आर्यसामाजिकाश्चातुर्वर्ण्यविषये अन्यथातिष्ठन्ते । तेषामयमाशयः ॥ वेदो हि सर्वस्य नः सनातनधर्मस्य मूलम् ॥ वेदे-यद्यदुक्तं तत्सर्वैरपि–स्वीकरणीयम् वेदोह्यपौरुषेयत्वात्सर्वः प्रमाणम् ॥ यत्तु पौरुषेयं नाम पुरुषेणालोच्यकृतं–तदप्रमाणम् अतएवाप्रामाण्यापत्त्या वेदस्यापौरुषेयत्वं स्वीकृतम्, मीमांसकैः ॥ तथाच न क्वापि वेदे चातुर्वर्ण्यमस्ति सर्वे एव ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च–न जातिनिबंधनोऽयं व्यवहारः किंतु गुणनिबंधन इति यो विद्वान स ब्राह्मणो यस्य बलं स क्षत्रियो-यस्य–द्रव्यं स वैश्यो यस्य च कोपि गुणो नास्ति किंतु केवलं सेवाकौशलं, स शूद्रो भवति ॥ नहि यस्य शुक्रशोणिते ब्राह्मणस्य भवतः सएव ब्राह्मण इत्यभिमानः ॥ स्मृत्यादिषु यद्यपि चातुर्वर्ण्यव्यवस्था कृता तथापि तासामप्रामाण्यात् ॥ तासां कर्तारोहि ब्राह्मणाः ॥ तथाहि पुरातनवृत्तसंशोधका इतिहासकारा एवं वदन्ति । एते आर्याः पूर्वमुत्तरध्रुवनिकटे न्यवसन् । तत्रच तेषां प्रजाबाहुल्यात् यथायथा दारिद्र्यमवर्धत तथा ते स्वदेशं विहाय क्रमेण दक्षिणध्रुवमुद्दिश्य प्रवासयांचक्रुः । मार्गे यत्र यत्र प्रवासप्रतिबन्धो ऽभवत्तत्र तत्रत्यान्

सर्वान् जनान्निहत्य तद्देशं स्वायत्तमकुर्वन् एवं सर्वप्रदेशं विजित्यास्य देशस्यार्यावर्तस्य सर्व सम्पत्समन्विततया सौख्यदत्वं वीक्ष्यात्रैव निवसन्ति स्म । ते खलु येऽत्रागता आर्यास्ते ब्राह्मणा ॥ तएव स्वेषु मध्ये कांश्चित्सुदृढान् दृष्ट्वा तान् पालनाधिकारे न्ययुंजन् ॥ कांश्चित्कृपणान् द्रव्यसम्पादनकुशलान् दृष्ट्वा वैश्यांश्चक्रिरे ॥ परंच सेवाकरणे कोपि समुत्सुको नाभवत् ॥ सेवकेन च विना कार्याणि रुद्धानीति वीक्ष्य तैर्जितान्. अनार्यान् बलात् गृहीत्वा सेवकाः कृताः तेषां नाम शूद्र इति कृतं, सोयं चतुर्थो वर्णः ॥ तेषामत्रत्या जिताः वयमेभिरस्माकमयं देशः इति ज्ञानंमाऽजनि इत्यालोच्य तैः न शूद्राय मतिं प्रदद्यात् इत्यादि वचनजातमकारि तेषु ये केचित् सेवकत्वेन परिगृहीतास्तएव शूद्रत्वेन व्यवन्हीयन्ते ॥ येच न सेवकास्तेषामतिशूद्र इति नाम कृतम्, तेच सर्वकर्मबहिष्कृताः संस्पर्शानर्हा. ग्रामात् बहिरेव नियते स्थले तिष्ठन्ति ॥ यत्र कुत्राचिदायान्तं विप्रं दृष्ट्वा तेन शङ्कं कृत्वा भूमावुपवेष्टव्यम् यच्छायया ब्राह्मणो न दूषितः स्यात् ॥ अत्रान्तरे तैरेव ब्राह्मणैः क्रियमाणा स्मृतयः ते ब्राह्मणाः प्रमाणत्वेन स्वीकुर्वन्तु ॥ सारासारविवेकचतुरास्तु अवश्यमेतत्स्मृतिजातं सर्वं स्वाभिप्रायकल्पितमेव वदेयुरिति न संशयः ॥ नह्येकपक्षेण कृतोन्याय उभाभ्यामप्यंगीकर्तव्य इति स्मृतीनामप्रामाण्यम् । व्यवहारदृष्ट्यापि न चातुर्वर्ण्यस्यावश्यकत्वम्, प्रत्युत तत्क्षेमनाशकमिति मन्ये । तथाहि । इदानीमवलोकयंतु भवंतः सर्वत्र ब्राह्मणा कीदृशः संजाताः ॥ वेदनामापि तैर्ज्ञायते वा ॥ सन्ध्या पीता वा शुक्ला वेति न स्वप्नेपि तेषाम् । एवं सर्वेषामपि वर्णानां गतिः-नहीदानीं-मुम्बई-नगरान्निर्गत्य कलकत्तानगरपर्यन्तं दिनत्रये धूमशकटएव स्थित्वा बध्वाऽनीतमन्नं भुंजानो विप्रकुलोत्पन्नोपि ( सार्टर ) राजकर्मनियुक्तो विप्रो भवति ॥ न नियतकाले सन्ध्यामुपासितुं शक्नोति ॥ अथ च तत्कार्यं मुंचति तदोदरपूरणं कथमिति- अस्मिन् कलौ सर्वे एकवर्णा एव ॥ किंच ॥ भवत्प्रमाणीभूतस्मृतेर्वचनमपि चातुर्वर्ण्याभावे विद्यते । तदिदं ( कलावाद्यन्तयोः स्थितिरिति ) न्यायेन कलौ चातुर्वर्ण्यं नास्त्येव । केवला ब्राह्मणावशिष्टा

तेषां गतिः प्रदर्शितैव ॥ एवंच सर्वे शूद्रा इति किं चातुर्वर्ण्येन ॥ अपिचेदानीं मास्तु यदा ब्राह्मणानामेवानुशासनमासीत् तदानीमपि शूद्राणां मनसि रोषो नूनमभूदेव ॥ युक्तमेवैतत् ॥ कोहि समानत्वे मनुष्यधर्मस्य वृथा दास्यं स्वीकुर्यान्मतिमान् ॥ यतोऽग्रे परकीया यावनास्तान्वशीकृत्य तेषां द्वारा ब्राह्मणराज्यमात्मसाच्चक्रुरिति इतिहासविदो वदन्ति ॥ तदेतस्यानर्थव्रातस्य कारणं परस्परं द्वेषः ॥ तस्य च द्वेषस्य कारणं चातुर्वर्ण्यम्, तस्य प्रतिपादका एता स्मृतय । इतिकथं ताः प्रमाणतां भजेयुः ॥ तस्माद्गुणानुरोधेन व्यवस्था यथाऽन्यत्र देशेऽस्ति तथा करणीया। कोयमाग्रहो यत्द्विजकुलमात्रजातेन ब्राह्मणबन्धुना विद्वान् शूद्रो ऽधः कर्तव्यः ॥ यदि स्थानमाहात्म्येन मूल्यं स्यात् तदा पूर्वं यत्र रत्नं प्रादुरभूत्तत्र खनौ जातः पाषाणोपि रत्नमूल्येन ग्राह्यः । न कोपि गृण्हाति ॥ गृण्हन् न देवानांप्रियेषु अद्वितीयतां न भजते एवमन्धपरम्परया प्राचीनां रीतिमनुसरन्तः प्रमाणयंतु स्मृतिस्तद्बोधितं चातुर्वर्ण्यं वयं नाभ्युपगच्छाम इति ॥ अत्रोत्तरयन्ति "सनातनधर्मानुयायिनः" स्मृतीनामप्रामाण्यं कुतः पौरुषेयत्वेनेतिचेदिदं तव वाक्यमप्रमाणम्, पौरुषेयत्वात्, इति वचनव्याघातः ॥ नच स्मृतीनां पौरुषेयत्वमस्ति तन्मया वाचोच्यत इति तर्हि बाधितविषयकत्वमप्रामाण्यं प्राप्तम् तथाच स्मृतिषु क्व बाधितविषयबोधकत्वमस्तित्प्रदर्शय ॥ नहि कस्मैचित्सुखं प्रदत्तं कस्मैचिद्दुःखमिति मनुः कुत्राचिद्रागी कुत्राचिद्द्वेषीति कल्पयामः ॥ ब्राह्मणस्य सुखंदत्तमितिचेदहो किं तत्सुखम् अहो वत्स दयानन्दानुशिष्य पश्य पश्य—आबाल्यान्मरणपर्यन्तं सकलकर्मजातं—मनुसंहितायां ॥ २।६ अध्यायमारभ्य षष्ठाध्यायपर्यन्त मुपदिष्टम् कियत्कष्टदमिति अहो यस्य ब्राह्मणस्य सुवर्णरजतालंकारा दूरं तिष्ठन्तु परंच धान्यसंग्रहस्याप्याज्ञा नास्ति ॥ तदुक्तम्—

कुसूलधान्यको वापि कुम्भीधान्यक एववा ॥
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥ ४-७-

तत्रापि च परस्योत्कर्षइति। भावमिश्राः सभ्याः एनं श्लोकं वीक्ष्य भवंतः किं वदंति ब्राह्मणानां कृते मनुना स्मृतिः कल्पितेति ? न कदापि

अहो आधुनिकानां मौढ्यं यद्ब्राह्मणैरेवायं सर्वो ऽनर्थव्रातः कथित इति वदन्ति ॥ ते न जानन्ति–यदद्यावधि द्विजैः सर्वाणि स्वसुखानि हित्वा आजन्ममभ्यस्य विद्या प्राणवत्परिरक्षिता यथा वयमिदानीं मनुष्याः तदुक्तम्, केचित्—

आहारनिद्राभयमैथुनानि । सामान्यमेतत्पशुभिर्नराणाम् ॥
ज्ञानं हि तेषां परमो विशेषो । ज्ञानेन हीनाः पशुभिः समानाः ॥

तथाच ब्राह्मणद्रोहः केवलं तेषामज्ञानादेव नान्यत्तत्र कारणम्। तस्मात्सर्वज्ञकल्पेन–जगत्कल्याणकारिणा–मनुना प्रोक्तत्वाद्भवत्येव मनुस्मृतिः प्रमाणम् ॥ वेदेपि मनोर्माहात्म्यमुक्तम् ( यन्मनुरनुवदत्तद्भेषजमिति ॥ ) नच वेदे चातुर्वर्ण्यं नास्तीति शक्यं वक्तुं ( ब्राह्मणोऽस्य मुखमासीत्वाहू राजन्यः कृतः ) इत्यस्यामृचि स्पष्ट एव चातुर्वर्ण्य-विभाग उक्तः । अपिच धर्मेन केवलं वेदा एव प्रमाणं तस्यातींद्रिय-त्वात्तदर्थस्यास्माभिः पामरैर्बोद्धुमशक्यत्वात्; किंतु वेदोपि तदनु-सारिण्यो, मान्यमुनिवरैर्वेदार्थानालोच्य, विहिताः स्मृतयश्च ॥ तथा-चोक्तम्—

श्रुतिस्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥
एतच्चतुर्विधं प्रोक्तं साक्षात्धर्मस्य लक्षणम् ॥–१–१२॥
वेदोखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ॥
आचारश्चैव साधूनामात्मन स्तुष्टिरेव च ॥ १–६ ॥
मनोरपि चातीतानागतवर्तमानज्ञतायां प्रमाणम् ॥
यः कश्चित्कस्यचित्धर्मो मनुना परिकीर्तितः ॥
सः सर्वोभिहितो वेदे सर्वज्ञानमयो हिसः ॥ १–७ ॥

तथा च न स्वार्थाभिप्रायेण मनुना स्मृतिः प्रोक्तेति—

यत्वया पुरेतिहासवादिनो मतमाश्रित्योक्तम्, तत्तथैवांगीकृत्य ब्रूमः ॥ भवतु तथा परंचेदानीं एकजातौ सुखंस्यात्किं, ॥ नहि चांडालस्यात्यंतमलिनबुद्धेर्ब्राह्मण्यासाकं विवाहे तज्जः पुत्रो बुद्धिमान्स्तथा भवेत्—यथा ब्राह्मणात्तस्यां जायमान पुत्रः । कदापि न स्यात् समलिन-एव स्यात् ॥ स्वभावश्चैष पदार्थानां यथा श्वेते वस्त्रे अति सूक्ष्मोपि

नीलो बिन्दुः स्फुटतया प्रतिभासते नैवं नीले महानपि श्वेतो बिन्दुः ॥ तथाच चाण्डालस्य तमोगुणप्रधानतया ब्राह्मण्यकारणं सत्वमपहृत्य तमएव वर्धेत ॥ तथाच सन्ततिस्तमोगुणप्रधाना निर्बुद्धा स्यात् । तस्मादपि नैकाजातिरिष्टा ॥ ननु दृश्यन्ते एकजात्युत्पन्ना अपि बहवो बुद्धिमन्तः पुरुषाः ॥ नहीदानीं युरोपखण्डे चातुर्वर्ण्यमस्ति, परंच तत्रापि एतादृशः पुरुषा धीमन्तः, यैरिदं सकलं भुवनं व्याप्तमिति प्रत्यक्षम् तस्मात्कथमेवं वदसीति चेत्सत्यं वदसि ? बुद्धिमन्तश्च चातुर्वर्ण्यहीनाः परद्वीपस्थाःनात्र संशयः परंच बुद्धिर्द्विविधा सात्विकी राजसीति राजस्या बुध्या समेतास्ते न सात्विक्या सात्विकीं बुद्धिमनुलक्ष्य मयोक्तम् ॥ सात्विकीहि बुद्धिः श्रेयसी न राजसीति किम्बहुनोक्तेन। यत्तुत्वयोक्तं चातुर्वर्ण्यं नास्त्येव सर्वे ब्राह्मणा वेदविहीनाः शूद्रा एव जाता इति तत्र भवादृशा एव कारणमिति मन्ये ॥ राजानस्तु परधर्मकत्वेन चातुर्वर्ण्यविषयकधर्माधर्मविचारे उदासीनाः । तथाच यथेच्छाचारस्य प्राबल्यात् दृश्यन्ते सर्वत्र ब्राह्मणा द्विजबन्धवः ॥ वस्तुतस्तु गोदावरीतीरे तस्मि स्तस्मिन् क्षेत्रेऽद्यापि वेदपारगाः विप्राः कोटिशः सन्तीति तत्र गत्वा द्रष्टव्यम् ॥ एतेन ( कलावाद्यन्तयोः स्थितिरिति ) वचनमपि व्याख्यातम् ॥ तस्याल्पत्वाभिप्रायकत्वात् ॥ अतएव नेपाले उदेपूरे क्षत्रिया अधुनापि सन्ति। यत्तूक्तं व्यवहारदृष्ट्या द्वेषजनकत्वान्न चातुर्वर्ण्यमपेक्षितमिति तत्तु अलौकिकं ते बुद्धिसामर्थ्यं प्रदर्शयति ॥ अहो घटस्य पटं प्रति कारणत्वं ब्रुवता त्वयाऽ धरीकृतास्तार्किकशिरोमणयः गदाधरप्रभृतयः ॥ जाल्म ? यत्र चातुर्वर्ण्यं नास्ति तत्र द्वेषोऽस्तंगतः ॥ सर्वे च तत्रत्या वेदान्तिनः संवृताः ॥ प्रत्युत तत्रत्या एव परस्परं द्विषंति यत्र चातुर्वर्ण्यं नास्ति ॥ यथा युरोपखण्डे। पश्यन्तु सर्वे सभ्या वृत्तपत्राणि ॥ स देशोऽन्यं देशं पादाक्रान्तं कर्तुं स्वसैन्यंस्वतरणिबलम् तथाऽभिनवप्राणघातकानि शस्त्राणि वर्धयति इति प्रत्यंकं दरीदृश्यते ॥ एतत्किं, द्वेषमूलकमुतानुरागमूलकं, ॥ जर्मनी, इंग्लंडं द्वेष्टि, तत्कस्य हेतो, र्मात्सर्यादथवा स्वराज्याधिक्यतृष्णया, न चातुर्वर्ण्यतः तथाचावश्यकं तदेव कारणमस्तु द्वेषस्य, किं चातुर्वर्ण्येन, अपिचास्तां

दूरगवेषणा ॥ स्वगृहे सोदरौ परस्परं द्विष्टः तत्र किं कारणं न तेषां भोजनं नास्ति,नापि स्पर्शो नास्ति, किंतु द्वेषोयं मनुष्यस्वभावः ॥ तत्र नचातुर्वर्ण्यं कारणमिति सुधियएवावगच्छन्तु ॥ अपिच यत्र चातुर्वर्ण्यमं- शतोपि स्यात्तत्र यत्किंचिदपि सुखं स्यात् ॥ यत्र तु तन्नास्ति, नास्ति तत्र सुखस्याशा ॥ यथाहि सांप्रतं युरोपखंडे प्रत्यहं संघाः, क्षोभाः, स्फोटाः, समुपलभ्यन्ते अस्य सर्वस्यानर्थ जातस्य कारणं तृष्णा, तस्यानियमनं विना नसुखं स्यात् ॥ नच तन्नियमनं, कर्मनिय- मनं विना, ॥ अधुना युरोपे नकर्मनियमोऽ नेनैतत्कर्तव्यमिति, ॥ किंतु, यद्यस्येष्टं तत्कर्तव्यमिति ॥ तथाचास्य नियमस्य संवृतोयं ईदृशः परि- णामः यस्य द्रव्यं बहुलमासीत्तेन बहुविधानि यंत्रागाराणि कृत्वा सर्वं द्रव्यं लब्धमन्ये ये दरिद्रिणः ते यथा कथंचिदुदरपूरणमात्रफलका- अभूवन् । तेन ते रुष्टाः प्रत्यहं सम्पादीन् नानादुःखदानुपायानुपयुंजते । ततश्च दुःखम् ॥ नियते तु कर्मणि ब्राह्मणेन विद्यैव कर्तव्या नान्यत्किं चिदिति नियमात्स उदरपूरणार्थं द्रव्यमिच्छन् अवश्यमेव प्रार्थयेद्वैश्यम् ॥ वैश्योपि विद्यार्थं ब्राह्मणं सर्वेपि रक्षणार्थं क्षत्रियं तेपि स्वसेवकं शूद्रं सेवार्थमिति परस्परमद्वेषिणः सुखं लभेरन् ॥ तथाचोक्तं गीतायाम्—

॥ परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति ॥

अपिचेदानीं चाण्डालं पृच्छतु भवान् ' किं भो त्वं पिपठिषसि वेदमुत स्वकर्मोपयोगिनीमेव काचिदधिकलाभदां विद्यामिति ॥ सोऽवश्यमेव ब्रूयात् ' नहि मया वेदः पठितुं शक्यः अथ च पठनेनापि भिक्षैव लभ्या तदपेक्षया यद्यस्मद्विद्यायामेव किंचिदधिकं शिक्षयेयं तदा प्रत्य- क्षएव लाभो भवितेति ॥ तथाच सर्वमाचाण्डालमाब्राह्मणं च वेदं पाठयिषन् भवान्कथमाप्तः स्यात् कथं च त्वत्कर्मणा युरोपखण्डेनानु- भूयमानमुपरिदर्शितं दुःखमत्र नागच्छेत् ॥ केवलं तेषां राजसत्ताविष- यकं सुखं दृष्ट्वा भवान् सर्वानेकीकर्तुं प्रवृत्त इत्यनुमिनोमि ॥ परंच नैतत्समीचीनम् ॥ राज्यशासनं जगदीश्वरप्रेरणया प्रचलति ॥ न तत्क- स्याप्यायतं ॥ यदि चातुर्वर्ण्येनाविभिन्ना वयं परस्परं द्रुह्यन्तो नराज्य- भारं सोढुं वा लब्धुं वा शक्ता इति ते मतिः स्यात् तदा धर्मराजप्रभृति-

भिर्न राज्यं कृतम्, नापि युरोपखण्डे आयर्लण्डादयो देशाः परतंत्रास्त-स्मान्नेदं पारतंत्र्ये प्रयोजकम्, चातुर्वर्ण्यम् ॥ किन्त्वीश्वरेच्छैव तेषां गुणाढ्यतैवेति निश्चिनु ॥ ननु वेदपारगब्राह्मणश्रेष्ठश्रुतमस्माभिस्ते वचनम् परंच पुनरपि ममेदं वचनं शृणु पश्य जगति किं प्रचलति कीदृशं च साम्प्रतं जातं जगत् ॥ नाधुना पूर्ववत्पूतिगंधिसलिलपरिपूर्णनिखातधूं-कुर्वन्मशकराजिताः पंथानः पाणिप्रमाः-किंतु समीकृताः सिक्ता-अभिनवाच्छजलेन विद्युत्प्रकाशपरिदीपिताः ॥ तथैवपुरेव तंतुवायेन करेण वीतं केवलगुप्तेन्द्रियतिरोधायकं वस्त्रं न परिधत्ते भवानपि, अपितु कोमलतयाधरीकृतहंसपक्षं मृदुलं दुकूलमाघोटकपर्यन्तं लंबमा-नम् ॥ एवं न पूर्वमिव चिक्कणतैलदीपा मन्दमन्दप्रकाशा न प्रकाशयन्ति वो गृहाण्यपितु स्वच्छप्रकाशा अन्धकारसामानाधिकरण्यमसहमाना इव काचदीपा भिक्षुकागाराण्यपि समलंकुर्वंति ॥ एवं सर्वत्रापि परि-वृत्तिर्जाता ॥ अधुना त्वत्सदृशो महापंडितोपि यदि सर्वानुपदिशेत् ॥ ' अहो किमिदं नवीनं वस्तुजातं क्रीणंति भवंतोनो यत्पूर्वं विद्यते तदेव समीचीनमिति ॥ तदा तेऽवश्यं त्वामुपहसंति ॥ तथाच तेषां नवीनवस्तुग्रहणे रुचिरस्तीतिज्ञात्वा परकीयाः कलानिपुणाः नवीनानि वस्तुजातानि प्रत्यहं प्रेषयंति हरंति च द्रव्यं ततश्च दारिद्र्यं वरिवर्ध्यते ॥ एवं स्थिते तस्य दारिद्र्यस्य परिहाराय तेषां कलाः शिक्षणीयाः ॥ नहि तेषां कला अज्ञात्वा शक्यं तैः साकं स्पर्धितुम् ॥ यत्र च प्रतिदिनं लक्षावधीनि वस्त्राणि समुत्पद्यन्ते तेन यंत्रागारेण साकमेकस्तन्तुवायः कथं तावंति वस्त्राणि वयितुं स्वल्पमूल्येन दातुं च स्पर्धेत । ततश्च तासां कलानां ज्ञानदायकानि यत्र शिक्षालयानि संति तत्रापि बुद्धि-मतामेव गमनं स्याच्चेत्तत्सफलं भवेत् ॥ नहि मन्दमतिना लभ्यास्ताः कलाः ॥ एवंच प्रकृष्टप्रज्ञैर्ब्राह्मणैरेव परदेशं प्रति गन्तव्यमिति प्राप्ते त्वदीयमेतच्चातुर्वर्ण्यं पथि निपतेत् ॥ योहि परदेशगामी स चाण्डाल-वत्सर्वैर्वर्णैस्तिरस्करणीय इति स्मृतयो वदंति । अनावस्थायामेतावन्तं परदेशगमनप्रभवं कष्टराशिं विषह्यास्मदर्थं कलां शिक्षित्वा ये समागता-स्तेषामेवं सत्कारः ॥ किं यत्तेषां जातिबहिष्करणम् ॥ तदेतद्वीक्ष्य निरु-

त्सुका नगच्छंत्येव परदेशम् ॥ आगतेषु तेषु कलाज्ञानाभावे दारिद्र्यं पुरस्तादेवस्थितम् ॥ याप्यस्ति द्रव्यकणिका सापि कुशलैः परकीयवणिग्भिरपहीयतएव ॥ एवंच चातुर्वर्ण्यं चातुर्वर्ण्यमिति वदद्भिर्भारतीयैर्मरणं वा स्वीकरणीयम्, अन्यथा तत् त्यक्त्वा परदेशं गत्वा तास्ताः कलाः सम्पाद्य, स्वदेशमागत्यबान्धवा अन्नेन तर्पणीया इति किं ते रोचते तत्सुहृत्सुभ्या वदेतिचेदत्र वदामः ॥

कुशाग्रमते सत्यं वदसि ॥ प्राप्त इदानीमीदृशः कालइत्यत्र न संशयः ॥ यदेकेन रात्रंदिवं कष्टानतिवाह्य यल्लब्धं तत्तस्यैवोदरपूरणपर्याप्तम् भवेन्नवेति संशयस्तदा जायापुत्रादिनां काकथा-॥ गतः स पूर्वकालो, यत्रेकेन संपादितं, जायापुत्रादिभ्यः सर्वेभ्यः पर्याप्तमभवत्॥ आस्तां। किं गतानुशोचनेन। प्रकृतमनुसरामः नवीनपदार्थपिशाचिका ग्रहोन्मत्ता एते जना भूयोभूयो बोधिता अपि- नतत्स्वीकारं जहति इत्यपि सत्यम्॥ तथाच तत्पदार्थज्ञानकला अस्माभिराकलनीया इत्यपि सत्यमेव ॥ परंचेदं त्वया मयापि मनसि करणीयम् ॥ यत्तासां कलानां ज्ञानमपि यथास्यादथच स्वधर्मरक्षापि यथास्यात्तथैवास्माभिर्यतनीयम्। नचैतदसंभवीति वाच्यम्, संभवस्य प्रदर्श्यमानत्वात् ॥ तथाहि ॥ सर्वेषां विद्यार्थिनां परदेशगमने व्ययो महानेव भवेत् ॥ श्रूयते च न्यूयार्क इति अमेरिकाखण्डस्थे प्रधाने नगरे वसतः प्रत्येकस्य जनस्य कार्पण्येन प्रतिमासं २०० रूप्यकाः ॥ २० विद्यार्थिनोऽस्माभिः प्रेषितास्तदा प्रतिमासं द्विसहस्त्र रूप्यकाणां व्ययः। स्वधर्महानिः स्वाचारत्यागो न विचारित एव ॥ एवंस्थिते तत्रत्यं कंचन तत्कलाप्रवीणमत्रानीयैका पाठशाला क्रियतेचेदधिका विद्यार्थिनोऽपि पठिष्यंति अथच व्ययोऽल्पएव स्यात् ॥ नह्यत्रैवेतावत्यंपि दुर्भिक्षे २० मुद्राधिको व्ययो विद्यार्थिभिरपेक्ष्यते ॥ एवं च २००० द्विसहस्त्रपर्यन्तं तस्मै विदुषे वेतनं दत्वा ततः शतं विद्यार्थिनां यदि तस्यां कलायां सुशिक्षितं भवति तर्हि विद्यार्थिनां न लाभो परदेशगमनेनेति स्पष्टमेव नच तत्र महांति द्रव्यागाराणि संति। सहस्रशस्तत्र विज्ञाः ॥ अन्यासामपि कलानां तत्र गतानां ज्ञानं सुलभं अत्रतु किमपि महता प्रयासेन एककला ज्ञान-

मेव कथं चित्स्यादिति महद्वैषम्यमिति वाच्यम् ॥ प्रथममेव तत्र गतानामस्मद्देशीयानां न सर्वासां कलानां ज्ञानं भवेत् यतस्तेषां प्रथमतोपि तस्या कलाया ज्ञानं नास्ति ॥ तद्यदि प्राथमिकं ज्ञानमत्रस्या त्तर्हि तत्र गतानां सौकर्यं भवेत् ॥ अपि च न सर्वे बुद्धिमन्तो ये प्रकृष्टबुद्धिशालिनस्तानेव विशिष्य प्रेषणे लाभो भवेत् ॥ नच तत्रगतैरपि तै राचारः परिहरणीयः । यावच्छक्ति सोप्याचरणीय एव ॥ अस्मद्देशीयानां तु महानयं दोषः ॥ यत्परकीयान्वस्त्रेष्वनुकुर्वंति न गुणेषु । तत्त्यक्त्वा तैर्गुणा एव सम्पादनीया न नेपथ्यादय इति ॥ नन्वेतावता त्वदुक्तेनाल्पैरपि बुद्धिमद्भिः परदेशं प्रति गन्तव्यमेव ज्ञानार्थमिति प्राप्तम् तथाच तेषां समाजसंमीलने चातुर्वर्ण्यं, क ॥ अथच बहिष्कारे ते न गच्छेयुरिति सेयमुभयतः पाशारज्जुरिति चेत्सत्यम् ॥ येतु केवलं स्वबांधवरक्षार्थं परदेशं गत्वा तत्र महान्तं कष्टराशिं विपह्यात्रागत्य पुनर्नानाविधाः शिल्पशाला निर्मायान्नदानेन स्वबान्धवानुपकुर्वंति ते जगद्वन्द्या एव नात्र कस्यापि विमतिस्ते सर्वैः साधव इव सत्कार्या एव । परंच तेषां समाजे मेलनं न क्षेमकरमिति मन्ये ॥ तथाहि ॥ समाजेऽज्ञानप्राबल्यमेव बहु । नास्ति ज्ञानस्य लेशोपीति सर्वेषां नः प्रत्यक्षम् ॥ एवंस्थिते यदि तादृशपरोपकारतत्परेभ्यो लोकेभ्यः केवलं कलासंपादनार्थं परदेशगमनायाज्ञा दत्ता चेदन्येपि तामेवाज्ञां समुल्लंघयन्तः स्वसौख्यार्थं यथेच्छं धनव्ययं कुर्वतस्तत्रत्याः सुलभा नारी र्विवाह्य समानयंत्येवात्यत्रत्या मूर्खा धनिनः ॥ नच तेषामीदृशवाममार्गाचरणे कोपि शास्ता ॥ राजदण्डस्तु परकीयैर्गृहीत स्तेचात्र धर्मविषये सुतरामुदासीना एव ॥ एवंस्थिते परदेशगमनेन जायमानलाभापेक्षया ऽतिदुस्तरोऽस्मत्पूर्वजपरम्परारक्षितगृहसौख्यनाशोऽवश्यं भवेदिति निश्चिनु ॥ अस्मिन्नर्थे जातमेवैकं वृत्तमुदाहरामि ॥ वर्षत्रयात्पूर्वं यदावंगदेशविभागः समजनि तदा तैः क्रुद्धैर्वंगीयैः स्वदेशवस्त्वेव क्रयणीयम् नान्यदिति शपथः कृतः तेषांच रीतिमनसरद्भिर्दाक्षिणात्यैरन्यैरन्यैश्च प्रायशः सर्वैरेव तथैवनियमः स्वीकृतः ॥ तदानीं दारिद्र्यपीडिता अपि बहवो जनाः स्थूलमपि दुर्लभमपि स्वदेशीयमेव वस्त्रमक्रीणन् ॥ अल्प-

तया च स्वदेशीयवस्त्राणामधिकग्राहकतयाच तेषां मूल्यमवर्धत ॥ महद्धमपि मूल्यं दत्वा समुदं तैर्दरिद्रिभिः स्वदेशानुरागात्क्रीतं तदानीं वस्त्रम् ॥ तेन महाल्लाभो मुम्बापुरि वणिजाम् यंत्रा ( मीलसा ) धिपानामजनि ॥ परंच सलाभस्तैः कस्मिन्कर्माणि योजित इति सावधानेन मनसा श्रोतव्यं ॥ परदेशसमुत्पन्नानां मोटारशकटानामधिकक्रयणे तैः सर्वोधिको लाभो योजितः हन्त तैरित्थं न मनसि कृतम् एते खल्वस्मत्बान्धवा दारिद्र्यपीडिता अपि अयोग्यमपि स्वदेशजं वस्त्रमधिकं मूल्यं वितीर्य क्रीणन्ति तद्यद्यैषां स्वल्पमूल्यं समीचीनं वस्त्रं क्रयणार्ह स्यात्तथास्माभिरेष लब्धोऽधिको लाभस्तत्र व्ययीकर्तव्य इति ॥ तस्मादनेनैकेनोदाहरणेन त्वन्मनसि समागतमेव स्याद्यत्सर्वेषामज्ञानबाहुल्यात्परदेशगमनाज्ञा न श्रेयस्करी, प्रत्युत प्रतिबन्धएव श्रेयानिति ॥ येतु तादृशा अलौकिकबुत्धिमंतः केवलपरोपकारपराः ते स्वाज्ञातिबांधवकल्याणायेदमपि समाजात्बहिः स्थानं स्वीकर्तव्यमेव कान्या गतिः ॥ तथाच स्वदेशकल्याणाय परदेशं गतानामपि बहिःस्थापनं श्रेयस्करमिति कृतबुद्धयो विदांकुर्वन्तु ॥ किमधिकलेखनेन साम्प्रतम् ॥ तस्माज्जगति योगक्षेमाय चातुर्वण्यमपेक्षितम् ॥ तेनच यथाविधि विहितेन पथा चलनेऽवश्यमेते चत्वारः पुरुषार्थाः सिध्यंतीति भवति चातुर्वर्ण्यस्येतन्मूलकत्वमिति—

---

## ( सर्वैर्वर्णैरेते लभ्या नवेति सुविचारः )

चत्वारोहि वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रभेदेन प्रागेवोक्ताः ॥ तेषां च विहितानि कर्माण्यपि दर्शितानि तेषामाचरणात्धर्मो भूत्वास्मिँल्लोके यथासुकृतं कामार्थौ लब्ध्वांऽते मोक्षं ते लभन्ते इति प्राप्तम् तथाच सर्वैः सर्वे पुरुषार्था लभ्या अथ कैश्चित्केचन एवेति शंकायां मीमांसकाः—धर्मार्थकामाः पुरुषार्थाश्चतुर्भिरपि लभ्याः। विहितकर्माचरणात्धर्मः शास्त्रगम्यः स भवत्येव ॥ अर्थकामावपि स्वप्रयत्नानुसारेण लभ्यावेव ॥ मोक्षस्तु द्विजस्यैव ॥ नान्यस्य ॥ ननु कुतोयमाग्रहः ॥ मोक्षजनको धर्मोहि द्विजेन यथा स्वविहितकर्माचरणाल्लब्ध एवं शूद्रेणापि स्वविहितकर्माचरणेन लब्धएव तत् कुतो वैषम्यम् नहि शृहितैकरूप्यक-

वापणे गत्वा तण्डुलानेको लभते नलभते चेति चेन्न ॥ वैषम्यात् ॥ मोक्षो-हिं नामात्माज्ञानप्रभवादस्मादनर्थरूपात्संसारात्दूरीभवनम् ॥ सकल-वैषयिकदुःखाभावइति यावत् ॥ अस्य पूर्णं विवरणं पूर्वमेव कृतम् ॥ सच तत्वज्ञानादेव। नान्यस्मात्कस्मादपि तथाचोक्तम् ( तमेवविदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय तिश्रुतौ ) ॥ तच्च तत्वज्ञानं वैदिकमेव ॥ नहि युक्त्यात्मतत्वं ज्ञातुं शक्यं ॥ केवलयुक्तिमालंब्यआत्मतत्वजिज्ञासवोवैन-शिकादयो वैनाशिकत्वं प्राप्ताः ॥ तदुक्तं वेदेनापि " नैषा तर्केणा मति पनेया रिति, तदुक्तं कृष्णद्वैपायनै ब्रह्मसूत्रेषु " तर्काप्रतिष्ठानादिति ॥ " अस्यसूत्रस्यार्थो यदि तर्केणैवात्मतत्वं ज्ञातुमिच्छथ तर्हि कदापि न ज्ञायेत तर्काणामप्रतिष्ठानात् ॥ नह्यतीतानागतवर्तमानान् सर्वदेशस्थांस्तार्किका-नेकत्र तेषां बुद्धीरप्यास्मिन विषये स्थापयितुं शक्नोति शक्तोपि ॥ लोकेपि निपुणतरैः कल्पिता अपि तर्काः अन्यैर्निपुणतमैराभासीक्रियमाणा दृश्यंते ॥ एवं च संदिग्धतया तत्वस्य तत्वज्ञानं न स्यात्तथाचानिर्मोक्षः ॥ तस्मात् श्रौतमेव तत्वज्ञानं मोक्षोपयोगि तच्च शुद्रस्य वेदाधिकाराभावाद-संभवीति तस्य मोक्षाप्राप्तिः ॥ ननु तुकारामादीनां साधुवर्याणां शूद्र-योनिजन्ममात्रेण दूषितानां कागतिरिरितिचेन्नैवं मोक्षस्तेषां शूद्रशरीराव-च्छेदेन किंतु अग्रे ब्राह्मणजन्म गृहीत्वा ते मुक्ता इति अवश्यमेव ॥ नच वाच्यं भो मीमांसक कुतोयं ते शूद्रजातौ महान्द्वेष इति। न मे द्वेषः। धर्मएव वदति । तथाहि। यं यं वर्णमुद्दिश्य वेदेन यानि यानि कर्माणि विहितानि तानि तेनाचरणीयान्येव ॥ अन्यथा प्रत्यवायः स्यात् ॥ प्रत्यवायी च सर्वथा मोक्षे ऽनधिकारी ॥ एवं सति तुकारामो नाम कश्चन साधुवर्योपि भवतु। परन्तु तेन स्ववर्णोचितं कर्म न कृतमिति कथं तत्प्रत्यवायविशिष्टः समुक्तः स्यात् ॥ तथाच द्विजानामेव चत्वारः पुरु-षार्थाः ॥ त्रयस्तु शूद्रसाधारणानामिति वदंति ॥ अत्र पुनर्दयानन्दानु-यायिन उत्तिष्ठन्ते ॥ ननु दृष्टं ब्राह्मणानां दुष्टत्वम् ॥ सदीनः शूद्रः प्रथमं दासीकृतस्ततश्च सर्वमेतज्जानीयादिति मनसि विचिंत्य तस्मै अक्षर-शिक्षापि न दत्ता वेदाध्ययनं सुदूरम् ॥ इदानीं वेदाध्ययनपूर्वकत्वात्तत्व-ज्ञानस्य तत्वज्ञानपूर्वकत्वान्मोक्षस्य तदपि नास्ति अयमपि नास्ति ॥

हतः स अभागी मानवोपि पशुरेव कृतइति प्रगटीकृतं दीनवात्सल्यं ब्राह्मणैरिति ॥ तान्प्रति वदामः ॥ अहो, एवं दीनवत्सलो भवान् शूद्रे एव कुतो वत्सलयति । न पशुषु । तानपि यदिवेदं पाठयसितदा तेषामपि मोक्षप्रदातृत्वात् जगति सर्वविश्रुतं ते वात्सल्यं स्यादिति। अथ ब्रूप न ते पठितुं शक्ता केवलं भोजनादिपरायणा एव त इति। तदा वयं पृच्छामः । कुतो न ते पठंति ॥ अपठनात्खलु तेषामेकोपि पुरुषार्थो नास्ति । तेषां सामर्थ्याभावादिति यदि वदासि तदा शूद्रे तत्सामर्थ्यमस्तीति कथं ज्ञातम् ॥ अथमनुष्यत्वादिति ब्रूषे तदा वयं वदामः पशुष्वपि प्राणित्वादिति ॥ अथत्वं वादविश्रांतो ब्रूयाः वादपाण्डित्यं मास्तु तत्वं शोधयामः ॥ किं शूद्रो वेदपठने पशुवदशक्तः किंवा ब्राह्मणवच्छक्त इति ॥ तदा वयमपि पृच्छामः ॥ शुकोपि वेदपठने शक्तएवेति स किं मुक्तो भवेत् ॥ अथ तज्ज्ञानवान् शूद्रः स्यान्नवेति विचारः प्रचलितः । शुकस्तु पठितमपि तं ज्ञातुं न शक्नोतीति उभयवादिसिद्धमिति वदसि चेत्तदा स्वीकुर्मो वेदार्थज्ञानेऽशक्ता एव शूद्राः ॥ "क्वानंतजननसंस्कारपरिपक्वमतयो यथायथं यथार्थवर्ण श्रेष्ठा द्विजातयः" ॥ "क्वच प्रकृतिमलिनाः शूद्रादयः" ॥ यत्रच वेदार्थज्ञाने निर्मलमतयः शुद्धवाणीरवा ब्राह्मणचूडामणयो न समर्थास्तत्र शूद्राणां का गतिः ॥ तथाच लौकिकानामुक्तिः– ("गजा यत्र निमज्जंति मशकानां तु का कथा") ॥ अपि च वेदार्थे एव सर्वेषामाग्रहः कुतः। किं स एव पुरुषार्थः । अन्ये न केपि! संतोवा सर्वे लब्धा युष्माभिः ॥ पूर्वान्पुरुषार्थान्नलब्ध्वाऽनुपशांतवासनाः कथं मोक्षं वांच्छत। नहि मोक्षो नाम मार्गोत्थितायाः कदल्याः फलम् ॥ येन विविधानि स्वकार्याणि कृत्वा स्वावासं प्रत्यागच्छता येनकेनापि पथिकेन लभ्यमिति ॥ अनंतेषु जन्मसु समुच्चितेन सुकृतजातेन कस्याचित्भाग्यवतः स जायते न सर्वेषां; तदुक्तंगीतासु—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ॥

तथाच मलिनसत्वस्य तादृशचित्तशुद्धेरभावान्नशूद्रस्य मोक्षो नापि वेदा-

ध्ययनेऽधिकारः ॥ नन्वेवं वेदाध्ययनं दिनेदिने क्षीयमाणं कदाचिदस्तं गच्छेदिति चेन्मैवं वोचः ॥ नहि मूर्खैं र्बहुभिः पठिता विद्या प्रचयं गच्छति ॥ अपितु अल्पैरपि बुद्धिमद्भिः स्वीकृता ॥ नहि पाठकानां बहुत्वं पृच्छंति, किं तूत्तीर्णाः कतीति साम्प्रतं लौकिका विद्या कुशला अपि ॥ ननु महानयं द्वेषस्य हेतुः ॥ केवलविप्रकुलजन्ममात्रलब्ध-सम्पदो वेदमधीत्य यथेच्छं पुरुषार्थान् गृण्हंति अथच कथं शूद्रस्ता-न्सहेतेति चेदेकामाख्यायिकां ते कथयामि तया-तव सर्वाशंका दूरी कृता स्यात् ॥ सेयमाख्यायिका—

कस्मिंश्चिन्नगरे कश्चित् धनाढ्यो वणिग्वरो निवसति स्म ॥ सच नित्यं स्वकार्ये दक्षो वार्धक्यात्कार्याणि कर्तुमसमर्थो यदा भूत्तदा तेन स्वपुत्रस्तद्गुणानुसारेण तानि कार्याणि विभज्य कर्तुमाज्ञप्ताः । तस्यच पुत्राश्चत्वार आसन ॥ तत्रज्येष्ठो दुर्बलः परन्तु बुद्धिमानास तंप्रति बुद्धिकार्याण्येव कथयामास ॥ द्वितीयस्तु मन्दमतिः परंच सुतरां बलिष्ठ आस तं द्रव्यरक्षणे नियोजयामास । तृतीयं तु व्यापारे नियो-जयामास ॥ चतुर्थं बालकं गृहकर्मण्येव योजितवान् ॥ सर्वेषु तेषु पुत्रेषु स्वस्वकार्याण्यानन्देनाचरत्सु सत्सु तत्कुलमानन्दातिशयं प्राप ॥ सर्वे-ऽपि ते बन्धवः स्व स्व कार्याणि कुर्वतो यथाकालं पितुः सकाशे स्थित्वा परस्परं निरतिशयां प्रीतिं चक्रुः ॥ एवमतीते कस्मिंश्चित्काले त्वत्सदृशः कश्चिध्दूर्तस्तेषां सौख्यमसहमानस्तं बालकं चतुर्थं पुत्र-मेवमवदत् ॥ अहो, किमिति भवान् गृहेएवावतिष्ठते नारीव; नत्वां पिता अन्यस्मिन् कर्मणि नियुंक्ते ॥ एते तु बन्धवस्त्वां मूर्खमन्वाना उदरपूरणार्थमन्नं लज्जारक्षणार्थं वस्त्रं ददतः सर्वस्वमपहरंति ॥ वस्तु-तस्तु त्वंचापि एषां बन्धुरेव ॥ पितातु जरठस्तन्मतानुसारीति ॥ ततश्च तस्य जाल्मस्य वाक्यं श्रुत्वा सचतुर्थः पुनः स्वबान्धवैः सह कलह-मकरोत् ॥ अथच स्वयं विनष्टस्तानपि विनाशयामास । अत्र पृच्छामि सर्वस्यास्यानर्थव्रातस्य कारणं किं ते बन्धव उत स पिताथवा सो ऽन्यथोपदेशको जाल्मः ॥ जाल्मएवेति चेदथ तूष्णीं तिष्ठ, सर्वेपि यथा-योग्यं कर्म कुर्वाणा एते वेदस्य चत्वारो वर्णाः पुत्राः सुखं तिष्ठन्तु

परस्परं प्रीतिं भावयन्तु त्वं च तेषां परस्परं द्वेषस्य कारणमाभूः। प्रकृतमनुसरामः ॥ तत्रापि पुराणमीमांसका एवं वदन्ति नैव गायत्री-मंत्राधिकारिणामपि द्विजानां सर्वेषां मोक्षलाभः किंतु संन्यासिन एव। सन्यासेनहि मोक्षजनकमदृष्टं जायते ॥ सन्यासेचाधिकारो ब्राह्मणस्य। "ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेनेत्यत्र" श्रुतौ ब्राह्मणपदेन विप्रस्यैव ग्रहणात्। तथाच त्रैवर्णिकानामपि मोक्षाशा दुर्लभैव ॥ नच केवलं श्रुतिपाठतस्तत्वज्ञानं भवति तस्य दुरितक्षयापेक्षायाः सत्वात्। एवंच नानाविधानि दुरितानि केषांचिद्भोगान्नाशः। केषांचिज्ज्ञाना-न्नाशः ॥ केषांचित्संन्यासेन नाश इति येषां संन्यासाधिकार स्तेषामेव मोक्ष इति—

श्रीमत्परमहंसपरिव्राजकाचार्या श्रीशंकराचार्यास्तु अत्युदार-तया मोक्षशास्त्रोपदेष्टतया सकलनिगमार्थज्ञतया त्रैलोक्यपूज्यचरणाः शूद्रानपि संशुद्धचित्तान् कर्मवशात् शूद्रयोनीन् समुत्पन्नतत्वज्ञानान् प्रति भवत्येव मोक्ष इत्याहुः ॥ तेषामयमाशयः ॥ नहि तत्वज्ञाने योने-रपेक्षा यस्य चित्तं निर्मलं तत्र तत्प्रादुर्भवत्येव ॥ नहि निर्मले सरसि न प्रतिबिम्बति चंद्रमाः वस्तुतंत्रत्वात्ज्ञानस्य तत्प्रतिबन्धकमलरहिते मनसि जायते ॥ नचोपदेशं विना कथं ज्ञानं स्यात् ॥ नह्ययं घट इति वृद्धेनानुपदिष्टस्य बालस्यायं घट इतिज्ञानं जायते ॥ तथाचात्मतत्वस्य वेदएवोपदिष्टत्वात् वेदेतु शूद्रस्यानधिकारात् कथं तुकारामादीनां शूद्राणां मोक्षइतिवाच्यम् ॥ वेदे शूद्रस्याधिकारो नास्ति इति तु युक्तम् ॥ परंचात्मतत्वं वेदएव समुपदिष्टइति यदवोचस्तन्न साधु भागवतादौ पुराणजातेपि आत्मतत्वस्य बहुशः उपदिष्टत्वात् ॥ तथाच यस्यचित्तं जन्मांतरे समाचरितनिष्कामकर्मजातेन शुद्धं तस्य तत्वज्ञानं पुराण-श्रवणेनापि जायतइति तस्य मोक्षप्राप्तौ किं प्रतिबन्धकम् ॥ नच तुकारामादीनां शूद्रत्वा त्तत्द्वर्णविहितानि कर्माणि तै र्न कृतानि ॥ नहि तुकारामो ब्राह्मणसेवामकरोत् सर्वदैव देवनामग्रहणतत्पर आस ॥ एवंच शूद्रवर्णोचित विहित कर्माचरणाभावात् प्रत्यवाय आवश्यकः।

प्रत्यवाये च सती मोक्षः केनाप्यास्तिकेन नेष्येते इति वाच्यम् ॥ शूद्रयोनौ जातस्य साधोस्तुकारामस्य तु तत्वज्ञानमेव जातमतो नसवेदविहितकर्मण्यधिकारी पूर्वशरीरे तु तेन कृतमेव कर्म येन चित्तशुद्धिर्जाता ॥ " वेदविहितकर्माणितु सर्वाण्यविद्याविषयकाणीति शारीरमीमांसायामध्यासभाष्ये " भगवत्पूज्यपादाचार्यै रेवोक्तम् ॥ एवंच न साधोः स्तत्वज्ञानिनः कर्मानाचरणप्रयुक्तः प्रत्यवाय इति ॥ नन्वेवं समानत्वे किमिति ब्राह्मणानां श्रैष्ठ्यम् किमिति ते वेदं पठन्तु न सुलभं पुराणेतिहासमितिचेद्भो मीमांसकबन्धो, किमिति भवानस्थाने क्रुद्धः ॥ शूद्राणामपि मोक्षपुरुषार्थः साध्य इत्यक्षरकथनेन सर्वे शूद्रामुक्ताः संवृत्ताः किंतु तावती शमदमादि सम्पद्यस्याद्यस्य च निरतिशयं वैराग्यं तेनात्मतत्वे श्रुते भवेत्तस्य मोक्षः तादृशी शमदमादिसम्पत् प्रकृत्या सात्विकेषु सात्विकाहारेषु ब्राह्मणेषु यदि दुर्लभा, साम्प्रतं तदा ऽत्यंतमलिनेषु तामसचित्तवृत्तिषु ॥ कुतस्तस्याः संभवः शूद्रेषु ॥ तस्माद्बाहुल्येन ब्राह्मणा एव मोक्षपुरुषार्थभाजः कश्चिद्भाग्यवान् शूद्रोपि स्यात्तं न वारयामः ॥ मोक्षो ब्राह्मणैरेव लभ्यो नान्यैरिति त्वदुक्तं नियमं स्वीकुर्म इति विशेषः ॥ वेदाधिकारस्तु तस्य चतुर्थवर्णस्य नास्त्येवेत्यलं विस्तरेण ॥

# ( उपसंहारः )

तदेवं क्रमेण पुरुषार्थनिर्वचनमारभ्य धर्मार्थकामानुपपाद्य मोक्षं-च सर्वेषु दार्शनिकानां मतेषु समीचीनमुपपाद्य सर्वेषु पुरुषार्थेषु मोक्ष-स्यैव परमपुरुषार्थत्वं प्रतिपाद्य तेषां कार्यकारणभावोपि वर्णितः तत एषां पुरुषार्थानां नः सनातनधर्मस्य मूलत्वं संभवति नवेति विचार्य मूलत्वमस्तीति निर्धारितम् ॥ अत्रांतरे चाश्रमविचारः सम्यक्कृतः। ततएते एव पुरुषार्थाश्चातुर्वर्ण्यप्रयोजका नवेति सन्दिह्य प्रयोजका एवेति निर्णितम् ॥ अत्रांतरे चातुर्वर्ण्यविषये आधुनिकानां सुधारकाणां दयानन्दानुयायिनां च सर्वे आक्षेपाः सम्यङ्निर्मूलिताः ततः सर्वै-रेवैते लभ्या नवेति विचारे मीमांसकशंकराचार्यमते प्रदर्श्य चरममत-मेव श्रेयस्करमिति व्यवस्थापितम् ॥ तत्रापि दयानन्दमतानुयायिनां शंका निराकृता ॥ तदेवं यथाशक्ति मया लिखितोयं लेखः । सुधियः प्रकृष्टप्रज्ञासागराः क्षमन्तां ममापराधविषये गुणविषये सहृदया भवंतु अंते च तं जगच्चालकं संप्रार्थ्य पण्डितप्रकाण्डानपि चावलोकायोप-संहारामि एनमतिदीर्घं लेखमिति शम् । श्रीकृष्णार्पणमस्तु ॥

लेखकः—

न्याय<br>वेदांत } तीर्थः—<br>सांख्य-सागरः— श्रीपादाचार्यः हसूरकर.

॥ समाप्तः ॥